# चन्दमामा

सम्पुटः - १५ मार्च् - २००० सञ्चिका - ४




## अन्तरङ्गम्


**कथाः**

| | |
|---|---|
| राक्षसधर्मः | ...... ९ |
| बुद्धिमान् बालकः | ...... १६ |
| चोरोऽपि हसितवान् | ..... १८ |
| मातृभाषां स्मृतवान् पण्डितः | ...... २७ |
| पुत्रजामातृभेदः | ...... ३९ |
| वास्तविकं सौन्दर्यं कुत्र ? | ...... ५२ |
| पितुः निमित्तम् ... | ...... ५९ |
| वास्तविकः चमत्कारः | ...... ६२ |

**ज्ञानप्रदधारावाहिनी**

| | |
|---|---|
| सुवर्णसिंहासनम् - २ | .......१९ |

**पौराणिकधारावाहिनी**

| | |
|---|---|
| महाभारतम् - ४८ | .......४५ |

**ऐतिहासिकविषयाः**

| | |
|---|---|
| भारतगौरवगाथा - १ | .......३० |
| भारतं - पूर्वम् इदानीं च | .......५७ |
| कावेरीतीरप्रयाणम् - ४ | .......३५ |

**स्थिरशीर्षिकाः**

| | |
|---|---|
| वार्ताविशेषः | .......०६ |
| एतन्मासे जातः महापुरुषः | .......०७ |
| भारतावगति-प्रश्नोत्तरम् | .......६० |
| कटाक्षेण प्रपञ्चवीक्षणम् | .......६४ |
| चित्रशीर्षिकास्पर्धा | .......६६ |



Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai - 600 026. Editor : Viswam


### एतस्य अङ्कस्य विशेषाः

राक्षसधर्मः





भारतगौरवगाथा

भारतावगति -
प्रश्नोत्तरम्



Editor
VISWAM
Editorial Advisors
RUSKIN BOND
MANOJ DAS
Designing & Technical Advisor
UTTAM

HEAD OFFICE
Chandamama Buildings
Vadapalani, Chennai–600 026
Tel : 4841778/4842087
Fax : 4841778
e-mail : chandma@md4.vsnl.net.in

OTHER OFFICES
BHUBANESWAR
116-B, B.D.A. Duplex House
Baramunda
Bhubaneswar-751 003
Orissa. Phone: 550 534

DELHI
Flat No. 415, 4 th Floor
Pratap Bhawan
5, Bahadurshah Zafar Marg
New Delhi-110 002.
Phone: 3353406/7

MUMBAI
2/B Naaz Buildings
Lamington Road
Mumbai-400 004
Phone: 3889763-3886324-3877110
Fax: 3889670

**For
USA
Single copy
$2
Annual subscription
$20**

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**

# मतदानं कथं मूल्यवत् स्यात् ?

एषु दिनेषु पत्रिकारङ्गे सर्वत्र पुनरपि सोद्वेगस्थितिः परिदृश्यते । तस्य कारणं - विविधराज्येषु प्रचलन्ति विविधसभायाः निर्वाचनानि उपनिर्वाचनानि च ।

वस्तुतः निर्वाचनं सोद्वेगस्थितौ न प्रचलेत् । निर्वाचनकाले शान्तमनस्कैः जनैः अभ्यर्थिचयनविषये स्वमतं प्रकाशनीयं भवति । अष्टादशवर्षीयाः अपि मतदानाधिकारम् अर्हन्ति इति निर्णयः कृतः अस्ति एषु दिनेषु । 'जाति-मत-पक्षादिभेदम् अविगणय्य योग्यः अभ्यर्थी चेतव्यः' इति ज्येष्ठैः ते बोधनीयाः सन्ति । एतत् तेषां कर्तव्यम् अपि । किन्तु एतत् कुत्रापि क्रियमाणं न दृश्यते । बहवः ज्येष्ठाः एतादृशे कार्ये अनासक्ताः । एतादृशकार्यार्थं ते कष्टम् अनुभवितुं श्रमं कर्तुं वा न सिद्धाः ।

योग्याः जनाः निर्वाचनप्रक्रियायां यथा भागं गृह्णीयुः तथा करणीयं चेत् सा प्रक्रिया शान्तिपूर्णतया यथा प्रचलेत् तथा जागरूकता अश्रयणीया भवेत् । इदानीम् अभ्यर्थिनः मतदातॄणां मनः आवर्जयितुं प्रयतमानाः दृश्यन्ते । वस्तुतः तु योग्याः मतदातारः एव अर्हम् अभ्यर्थिनं प्रार्थयेयुः - 'भवता निर्वाचनस्य अभ्यर्थिना भवितव्यम्' इति ।

उत्तमः सामाजिकसंस्कारः यदि व्यवहारगतः भवति तर्हि पूर्वोक्ता स्थितिः दृश्यते । अतः तादृशं सामाजिकसंस्कारं, तदनुकूलपरिसरं च निर्मातुं प्रयत्नः करणीयः अस्ति अस्माभिः ।

# वार्ताविशेषाः

## कोषे मृत्युदेवतायाः प्रतिष्ठापनम्

यः स्वकोषे धूमवर्तिका(सिगरेट्)कोषं स्थापयति सः वस्तुतः तत्र मृत्युदेवतां प्रतिष्ठापयति । वराकः धूमपानप्रियः न जानाति यत् एकस्याः धूमवर्तिकायाः सेवनं जीवनस्य ११ निमेषान् नाशयति इति । २० धूमवर्तिकात्मकः एकः कोषः तत्सेविनः जीवितावधेः ३.४० घण्टाः ह्रासयति ।

१९९९ तमवर्षस्य नवम्बर्मासे प्रवृत्तं सर्वेक्षणं ज्ञापयति यत् एतस्य वर्षस्य समाप्तितः पूर्वं चतुर्लक्षजनाः प्रायः धूमपान-सम्बद्धरोगैः एव मरणं प्राप्नुयुः इति ।



## हासात् आयुषः वृद्धिः

धूमपानं जीवनं नाशयति चेत् हासः आयुषः वृद्धिं कल्पयति । एतम् अंशं प्रमाणीकर्तुम् अपेक्षिताः सङ्ख्यासङ्ग्रहांशाः अस्मत्समीपे न सन्ति, तथापि हासः आयुर्वर्धकः इत्यंशः तु जगति सर्वत्र अङ्गीक्रियते एव । तत् प्रमाणसिद्धं न स्यात् नाम, तथापि हासः जीवनम् आनन्दमयं करोति इत्यत्र तु नास्ति विप्रतिपत्तिः । जनवरीमासस्य नवमे दिनाङ्के पञ्चशताधिकाः हासप्रियानां सङ्घाः विश्वहासदिनम् (वर्ल्ड् लाफर् डे) आचरितवन्तः ।



## सौरमण्डलम् एव गृहम् !

केषाञ्चित् दृष्ट्या वासभवनम् एव तदीयं गृहम् । अन्ये केचन ग्रामं नगरं वा गृहं भावयन्ति । पुनः केचन समग्रं देशम् एव गृहं मन्यन्ते । इतरे केचन वसुधामेव कुटुम्बकम् चिन्तयन्ति । अपरे केचन 'स्वदेशो भुवनत्रयम्' इत्यत्र विश्वासवन्तः । अत्युदारमनस्काः केचन एव सौरमण्डलम् एव गृहं परिभावयेयुः ।



'सौरमण्डलम् एव गृहम्' इत्येषा कल्पना अवास्तविकी न इति प्रमाणीकुर्वन्ति ब्रिटिष्-ज्योतिषिकाः । सौरव्यूहस्य कस्माच्चित् नक्षत्रात् प्रकाशः आगच्छति इति ते वदन्ति । स च प्रकाशः अस्माकं जीवने अपि प्रभावं जनयति इति श्रूयते । अतः 'सौरमण्डलम् एव गृहम्' इत्येतत् सिद्धं खलु ?

## एतन्मासे जन्म प्राप्तवन्तः महापुरुषाः

# दाराशुकोहः

मोगलसम्राजः शाहजहानस्य, राज्ञ्याः ममताझायाः च यदा पुत्रोत्सवः जातः तदा सर्वत्र आनन्दतरङ्गाः प्रसृताः । एषा घटना १६१५ तमवर्षस्य मार्च्मासस्य २० दिनाङ्के घटिता । तदवसरे समग्रे देशे उत्सवाः आचरिताः ।

राजकुमारस्य नाम दाराशुकोहः इति निश्चितम् । सः प्रतिपच्चन्द्रः इव प्रवृद्धः । सः दयाशीलः स्नेहमयः च आसीत् । सामान्यतः राजकुमाराः यादृशेषु सुखभोगादिषु निरताः भवन्ति तेषु अत्यल्पा भवति स्म तस्य प्रवृत्तिः । सः स्वस्य दिनानाम् अधिकाधिककालम् वेदोपनिषदादीनां भारतीय-तत्त्वग्रन्थानाम् अध्ययने यापयति स्म । सः तत्त्व-शास्त्रादिविषयेषु चर्चां कर्तुं पण्डितान् स्वप्रासादं प्रति बहुधा निमन्त्रयति स्म । एषा शास्त्रचर्चा क्वचित् सप्ताहं ततोऽपि अधिककालं वा प्रवर्तते स्म अखण्डतया ।



सः काश्चन उपनिषदः गीतां च पर्शियन्भाषया अनूदितवान् । जीवित-लक्ष्यादिविषये हिन्दुविचारधारायाः मुस्लिमचिन्तनस्य च अस्ति भूयान् मतभेदः इति सः अवगतवान् आसीत् । सः 'समुद्रसङ्गम'नामकं पुस्तकं लिखितवान् अस्ति । समुद्रयोः सङ्गमः तेन तन्नाम्ना लक्षितः । ग्रन्थेऽस्मिन् सः उभयविश्वासयोः स्थितं सादृश्यं विस्तरेण निरूपयति ।

यस्मिन् काले दाराशुकोहः एतादृशेषु महत्त्वपूर्णेषु कार्येषु आत्मानं प्रवर्तितवान् आसीत् तत्काले तदीयः अनुजः औरङ्गजेबः तं विरुध्य कुतन्त्रनिर्माणे निरतः आसीत् । औरङ्गजेबस्य इष्टसाधने सहकर्तुम् इव शाहजहानं महत् अस्वास्थ्यम् अबाधत । एतम् अवकाशम् उपयुज्य औरङ्गजेबः सिंहासनं स्वायत्तीकृत्य दाराशुकोहं कारागारे स्थापयितुं प्रयत्नं कृतवान् । दाराशुकोहः आत्मानं रक्षन् दादरशासकस्य जीवनखानस्य गृहे शरणार्थित्वेन स्थितवान् । पूर्वं कदाचित् दाराशुकोहः एव जीवनस्य प्राणान् रक्षितवान् आसीत् । किन्तु इदानीं जीवनः कृतघ्नताम् आचारन् दाराशुकोहम् औरङ्गजेबाधीनं कृतवान् ।

क्रूरः औरङ्गजेबः दाराशुकोहं बद्ध्वा देहली-मार्गेषु आकर्षन् वध्य-स्थानं नीतवान् । १६५९ तमे वर्षे आगस्ट्मासस्य ३० दिनाङ्के दाराशुकोहस्य इहलोकव्यवहारः समाप्तः । १६६२ तमे वर्षे तदीयः पुत्रः सुलेमानः कारागारस्थः एव मारितः । स्व-सहोदरौ मुराद्-शूजौ अपि औरङ्गजेबेन निर्दयं मारितौ आस्ताम् ।

### दाराशुकोहः कथयति....

*'भगवतः साक्षात्कारः इहजन्मनि न शक्यते, परजन्मनि एव' इति केचन वदन्ति । इदं युक्तिसम्मतं न इति अहम् अभिप्रैमि । यदि भगवान् सर्वान्तर्यामी इत्येतत् अवितथं स्यात् तर्हि तस्य दर्शनं केनचित् रूपेण, कदाचित् कुत्रचित् वा भवेत् एव । इहलोके यः भगवन्तं द्रष्टुं न शक्नोति सः परलोके अपि तं द्रष्टुम् असमर्थः स्यात् ।*

* * * *

*मम चिन्तनशक्तिः एव विष्णुमयी अस्ति । सः भगवान् विष्णुः मम मनः मन्दरपर्वतं कृतवान् अस्ति । ततः अहं ग्रन्थसागरस्य मथनं करोमि । एवं मथनात् मया तादृशं रत्नतुल्यं ज्ञानं प्राप्तम् अस्ति, यच्च देवदानवानां मथनात् प्राप्तानि चतुर्दश रत्नानि अपि अतिशेते, यादृशं च तैरपि न प्राप्तं तदा । भगवद्भक्त्या ज्ञानमार्गेण च 'समुद्रसङ्गम'-कार्यस्य परिसमापने मया शक्तिः प्राप्ता, यस्मिन् च ग्रन्थे मतद्वयस्य मधुरसङ्गमः दृश्यते ।*

## Statement about Ownership of CHANDAMAMA (Sankrit)

Rule 8 (form VI), Newspaper(Central) Rules, 1956

| | |
|---|---|
| 1. Place of Publication | CHANDAMAMA BUILDINGS<br>NSK Salai<br>Chennai-26 |
| 2. Periodicity of Publication | MONTHLY<br>1st of each Calender month |
| 3. Printer's Name<br>Nationality<br>Address | B.VISWANATHA REDDI<br>INDIAN<br>Chandamama Buildings<br>Chennai-26. |
| 4. Publisher's Name<br>Nationality<br>Address | B.VISWANATHA REDDI<br>INDIAN<br>Chandamama Buildings<br>Chennai-26 |
| 5. Editor's Name<br>Nationality<br>Address | B.VISWANATHA REDDI<br>INDIAN<br>Chandamama Buildings<br>Chennai-26 |
| 6. Name and Address of individuals who own the paper | Chandamama India Ltd.,<br>Board of Directors:<br>1. Vinod Sethi<br>2. B. Viswanatha Reddi<br>3. P. Sudhir Rao |

*I, **B. Viswanatha Reddi,** hereby declare that the particulars given above are true to the best of my knowledge and belief.*

1st March 2000

**B. VISWANATHA REDDI**

*Signature of the Publisher*



वेताल-कथा

# राक्षसधर्मः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवतः सहनाशक्तिः अपूर्वा । कठिनातिकठिनं परिश्रमं कर्तुम् अपि समर्थः भवान् । यत् अपेक्ष्यते तत् प्राप्तुं सामर्थ्यम् अपि अस्ति भवतः । अतः सर्वथा प्रशंसार्हः एव भवान् । तथापि भवतः व्यवहारविषये मां बाधते कश्चन सन्देहः । युक्तायुक्तनिर्णयसामर्थ्यं सदसद्विवेकः च किं भवतः अस्ति ? केचन अदृष्टवशात्, कालवशात् वा वर्धमानाः आकाशस्पर्शिनः भवन्ति, स्वर्गसुखं च प्राप्नुवन्ति । क्वचित् दानवाः अपि एवं व्यवहरन्ति । किन्तु



तेषु केचन प्राप्तम् अपि स्वर्गसुखं विशेषावकाशं च अविचार्य दूरीकुर्वन्ति । भवतः मार्गायासपरिहारार्थं विवेकवर्धनार्थं च दीर्घबाहुनामकस्य दानवस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कदाचित् कुन्तलदेशे शङ्करशास्त्री नाम कश्चन वृद्धपुरोहितः वसति स्म । कदाचित् सः कस्यचित् धनिकस्य ग्रामं गत्वा पौरोहित्यं समाप्य धान्यदक्षिणादिभिः सह स्वग्रामं प्रत्यागच्छन् आसीत् । त्वरया ग्रामः प्राप्तव्यः इति चिन्तयन् सः अरण्यमार्गे वेगेन पदानि स्थापयन् आसीत् ।

पर्वतं परिक्रम्य स्थिते मार्गे सः गच्छन् आसीत् । तस्मिन् एव पर्वते गुहायां दीर्घबाहुः नाम राक्षसः निवसति स्म । सः गुहाद्वारसमीपे उपविश्य आहारस्य प्रतीक्षां कुर्वन् आसीत् । बहुभ्यः दिनेभ्यः तेन आहारः न प्राप्तः आसीत् । दूरात् एव आगच्छन्तं शङ्करशास्त्रिणं दृष्ट्वा सः नितरां सन्तुष्टः । सः स्वकीयं दीर्घं हस्तं प्रसार्य कुक्कुटशावकं गरुडः इव शङ्करशास्त्रिणं गृहीत्वा स्वमुखसमीपं नीतवान् । शङ्करशास्त्रिणः कृशतां वृद्धतां च दृष्ट्वा सः स्वगतम् अवदत् - ''अहो, दौर्भाग्यं मम ! अद्य आहाररूपेण प्राप्तः एषः, कृशः वृद्धः रुचिहीनः च । तथापि सद्यःकालिकीं बुभुक्षां निवारयितुं तु एषः अलम्'' इति ।

राक्षसस्य मुखं गुहा इव दृश्यते स्म । दन्ताः च शूलायुधानि इव तीक्ष्णाः दीर्घाश्च आसन् । एतत्सर्वं दृष्ट्वा शङ्करशास्त्री नितरां भीतः ।

अपायकाले अपि शङ्करशास्त्रिणः बुद्धिः कार्यं कर्तुं समर्था आसीत् । क्षणाभ्यन्तरे तस्य मनसि कश्चन उपायः स्फुरितः । 'कथञ्चित् एषः सन्तोषितः चेत् मम मुक्तिः भवेत्' इति निर्णीय सः उक्तवान् - ''दानवेन्द्र ! दर्शनमात्रेण ज्ञायते यत् भवतः शक्तिः अपूर्वा इति, अलौकिकशक्तयः अपि भवति सन्ति इति च । अत्र उपविष्टः एव भवान् दूरे स्थितं मां गृहीतवान् यत् तदेव भवतः अपूर्वशक्तिमत्त्वं द्योतयति । एतादृशं कार्यं देवताः मानवाः वा कर्तुं सर्वथा न अर्हन्ति । दानवेन्द्रमात्रसाध्यम् एतत्'' इति ।

एतत् श्रुत्वा सन्तुष्टः राक्षसः अट्टहासं कुर्वन् - ''अये क्षुद्रमानव ! एतादृशसामर्थ्य-कारणात् एव मया 'दीर्घबाहुः' इति नाम

प्राप्तम् । पश्यतु मम हस्तयोः दीर्घताम्'' इति उक्त्वा अपरं हस्तं प्रसार्य दूरस्थस्य कस्यचित् वृक्षस्य शाखां खण्डयित्वा क्षिप्तवान् ।

अत्रान्तरे शङ्करशास्त्रिणि धैर्यम् उत्पन्नम् आसीत् एव । सः राक्षसस्य मुखं निर्निमेषं पश्यन् उक्तवान् - ''अहम् अस्मि वृद्धः ज्योतिषिकः । अतः अल्पे एव काले मया प्राप्यमाणं मरणं मया ज्ञायते एव । यदि मम दुर्बलम् एतत् शरीरं क्षणकालं यावत् वा भवतः बुभुक्षां शमयेत् तर्हि मम जीवनं सार्थकम् एव । तेन मया सुमहत् पुण्यं सम्पादितं भवेत् । अतः मरणात् अल्पा अपि भीतिः नास्ति मम । मम इच्छा अस्ति यत् मम मरणात् पूर्वं भवान् मन्मुखात् स्वजन्मरहस्यं जानातु इति । अतः मम खादने अल्पः विलम्बः कृतः चेत् भवतः एव लाभः स्यात्'' इति ।

एतत् श्रुत्वा नितरां सन्तुष्टः राक्षसः शङ्करशास्त्रिणं भूमौ स्थापयित्वा कुतूहल-पूर्वकम् उक्तवान् - ''किं ममापि जन्मनः किञ्चित् रहस्यम् अस्ति ? किं तत् रहस्यम् ? उच्यतां तावत्'' इति ।

शङ्करशास्त्री त्रिकालज्ञः महाज्ञानी इव व्यवहरन् किञ्चित्कालं राक्षसस्य मुखं निर्निमेषं दृष्टवान् । ततः नेत्रे निमील्य तेन आकाशः दृष्टः । किञ्चित्कालस्य मौनस्य अनन्तरं सः - ''भवान् जन्मद्वयात् पूर्वम् एतस्य एव कुन्तलदेशस्य राजा शूरसिंहः आसीत् । भवतः शासनस्य श्रेष्ठता अद्यापि गीतरूपेण गीयते जनैः । यदा भवान् राजा आसीत्



तदा भवतः कीर्तिः दिगन्तविश्रान्ता भवति स्म । क्रोधशीलस्य ऋषेः शापस्य कारणतः भवता एतत् राक्षसजन्म प्राप्तम् । इदानीं गुहास्था कठिनशिला एव भवतः सिंहासनम् । क्व सः पराक्रमी शूरसेनः ? क्व भवान् निकृष्टं जीवनं यापयन् राक्षसः दीर्घबाहुः ? भवतः एतां दुरवस्थां दृष्ट्वा अहं नितरां खेदम् अनुभवामि'' इति उक्तवान् । 'नरभक्षणात् एषः जुगुप्सितः यथा भवेत् तथा कृतं चेत् मम प्राणाः रक्षिताः एव' इति शङ्करशास्त्रिणः चिन्तनम् आसीत् ।

''मद्विषये खेदः प्राप्तव्यः नास्ति मनुष्यमित्र ! मदीयं पूर्वजन्मरहस्यं ज्ञातं यत् सः तु महतः सन्तोषस्य विषयः । किं मम अग्रिमजन्मविषये अपि भवान् किमपि वक्तुं

शक्नुयात् ? एतस्मात् राक्षसजीवनात् मम मुक्तिः कदा ?'' इति पृष्टवान् दीर्घबाहुः ।

गाम्भीर्येण शिरः चालयन् उक्तवान् शङ्करशास्त्री - ''मुक्तेः मार्गस्तु अस्ति । यः शापं दत्तवान् सः एव शापविमुक्तिमार्गम् अपि दर्शयेत् । मम अन्तर्दृष्टिः वदति यत् सः इदानीं हिमालये तपः करोति इति । अतः भवतः शापात् मुक्तिः असाध्या एव । तदर्थं कुतो वा चिन्ता ? यदि भवान् इच्छेत् तर्हि राक्षसरूपी सन् एव राजा भवेत् । यदि भवान् राजा भवेत् तर्हि भवतः कष्टानि समाप्तानि भवेयुः । गुहायाः पुरतः उपविश्य आहारस्य प्रतीक्षा करणीया न भविष्यति । प्रतिदिनं रुचिकरः आहारः । यथेच्छं मद्यपानं कर्तुं शक्यम् । धर्तुम् उत्तमानि वस्त्राणि प्राप्यन्ते । सुन्दराणि आभरणानि धर्तुं शक्यानि । सेवार्थम् असंख्याः सेवकाः सदा सन्नद्धाः भवन्ति ।''

शङ्करशास्त्रिणः वचनस्य श्रवणात् दीर्घबाहोः मनसि राजत्वप्राप्तिविषये इच्छा उत्पन्ना । राजत्वप्राप्त्यनन्तरं यत् भोजनं प्राप्येत तस्य स्मरणतः तस्य मनः खिन्नं जातम् । सः शङ्करशास्त्रिणं पृष्टवान् - ''तत्र भोजनार्थं किं मानवाः प्राप्येरन् ? मया तु प्रतिदिनं त्रयः मानवाः भोजनार्थम् अपेक्ष्यन्ते । मम एषः व्यवहारः प्रजानाम् अप्रीत्यै भवेत् खलु ?'' इति ।

''एषा अपि न महती समस्या । राज्ये इदानीं जनसङ्ख्या अधिका अस्ति । भोजन-द्वयस्य प्राप्त्यर्थम् अपि बहवः कष्टम् अनुभवन्तः सन्ति । भोजनाभावतः केचन म्रियन्ते अपि । तथा ये बुभुक्षया म्रियन्ते तेषां मरणं निश्चितम् । ते भवतः आहाराः भवन्तु । तेन भवतः आहारसमस्या परिहृता । देशे जनसंख्या अपि निगृहीता भविष्यति । अतः जनसंख्यानियन्त्रणहेतुकः भवतः प्रयत्नः



प्रजानां सन्तोषाय एव भविष्यति'' इति उक्तवान् शङ्करशास्त्री ।

राक्षसः पुनः पृष्टवान् - ''तदस्तु, इदानीं यः राजा अस्ति तस्य का गतिः ?'' इति ।

''भवन्तं दृष्ट्वा सः भीतः सन् विनाविरोधं राज्यं दद्यात् । अथवा भवान् तम् एव खादित्वा सिंहासनारोहणं कर्तुं शक्नुयात् । अथवा राजा एव स्वयं भवते राज्यं ससन्तोषं यथा अर्पयेत् तथा अहं योजनां करिष्यामि । तद्विषये भवतः चिन्ता किमर्थम् ? राजधानीं भवान् आगच्छति चेत् सर्वम् अभीष्टं सिद्धम् इव'' इति उक्तवान् शङ्करशास्त्री ।

'अप्रयत्नेन एव राजत्वं यदि प्राप्येत, सर्वविधसुखानि ततः यदि विनायासेन प्राप्येरन् तर्हि राजधानीं प्रति गमनेन का हानिः ?' इति चिन्तितवान् राक्षसः । 'यदि एषः अरण्यात् बहिः नीयेत तर्हि प्राणरक्षणार्थं कोऽपि उपायः कर्तुं शक्येत । अरण्ये राक्षसशक्तेः एव जयः । अरण्यात् बहिः तु बुद्धिशक्तेः जयः अपि भवितुम् अर्हति' इति चिन्तनम् आसीत् शङ्करशास्त्रिणः ।

ततः उभौ अपि राजधानीं प्रति प्रस्थितवन्तौ । अरण्यमार्गे गमनसमये भीत्या परितः पश्यन् जागरूकतया गच्छन् आसीत् शङ्करशास्त्री । किन्तु अरण्यं यदा अतिक्रान्तं तदा विना भीतिं निश्चिन्ततया पदानां स्थापनम् आरब्धवान् सः ।

एतम् अंशं राक्षसः लक्षितवान् एव । सः एतस्य कारणं पृष्टवान् । तदा शङ्करशास्त्री उक्तवान् - ''अरण्ये व्याघ्र-सिंहादयः क्रूर-जन्तवः भवन्ति । ते आहारार्थं यदाकदाचित् अपि अस्माकम् उपरि आक्रमणं कर्तुम् अर्हन्ति । अतः अहं जागरूकतया गच्छन् आसम् अरण्ये । अरण्यात् बहिः तु तेषाम् आक्रमणस्य सम्भावना नास्ति । अतः निश्चिन्तः अस्मि'' इति ।





''किं वन्यजीविनः क्रूरपशवः अरण्यात् बहिः आगन्तुं न अर्हन्ति ?'' इति कुतूहलेन पृष्टवान् राक्षसः ।

तदा शङ्करशास्त्री हसन् उक्तवान् - ''दानवेन्द्र ! मीनानां वासः जले । मनुष्याणां वासः ग्रामे नगरे च । एवम् एव व्याघ्र-सिंहादीनां निरापदं वासस्थानम् अरण्यम् एव । यदि ते ग्रामं नगरं वा आगच्छेयुः तर्हि मानवाः तान् मारयेयुः । एवम् एव मानवाः यदि अरण्यं प्रविशेयुः, तर्हि हिंस्रपशवः मानवान् मारयेयुः । अतः स्वस्थाने स्थितिः एव सर्वेषां क्षेमाय । एषः एव सृष्टिधर्मः'' इति ।

तौ अग्रे गतवन्तौ । कस्याश्चित् नद्याः तीरे स्थितं किञ्चन गुरुकुलं ताभ्यां प्राप्तम् । तत्र केचन व्यायामनिरताः आसन् । पुनः केचन धनुर्विद्याभ्यासे निरताः आसन् । अन्ये केचन खड्गविद्याम् अभ्यस्यन्तः आसन् । गुरुः सुप्रतिभः दूरे उन्नते आसने उपविश्य सर्वं परिशीलयन् आसीत् ।

एतत्सर्वं दृष्ट्वा आश्चर्यम् अनुभवन् राक्षसः पृष्टवान् - ''किम् अत्र प्रवर्तमानम् अस्ति पण्डितवर्य ?'' इति ।

''एतत् गुरुकुलम् । विविधदेशेभ्यः समागताः राजकुमाराः अत्र विद्याभ्यासं कुर्वन्ति । शस्त्रविद्या शास्त्रविद्या च अत्र बोध्यते । अयोध्या-कोसल-गान्धारादिदेशानां राजानः अपि एतस्य शिष्याः एव । ते सर्वे एतं परमपूज्यं भावयन्ति । यदि गुरुः इच्छेत् तर्हि सः चक्रवर्ती भवेत् । सर्वे राजानः स्वसम्पत्तिं राज्यं च तस्य पदतले समर्पयेयुः । किन्तु गुरुः तादृशं न इच्छति । सर्वथा निःस्पृहः सः'' इति विवरणं दत्तवान् शङ्करशास्त्री ।

''तादृशसामर्थ्यवान् अपि एषः सुप्रतिभः किमर्थम् एवम् अकिञ्चनः इव अरण्ये कुटीरे वसति ? किमर्थं वा दारिद्र्यजीवनं यापयति सः ? किमर्थं वा सः राजा न जातः ?'' इति कुतूहलेन पृष्टवान् राक्षसः ।

''आचार्यः सुप्रतिभः शस्त्र-शास्त्रनिपुणः, सर्वराजपूज्यः च यथा अस्ति तथैव ज्ञानी अपि अस्ति । सः जानाति यत् राज्यपालनं मम धर्मः न, विद्यादानम् एव मम धर्मः इति । सर्वे यदि स्वधर्मं पालयन्ति तर्हि एव लोकस्थितिः उत्तमा भवेत् । सूर्य-चन्द्र-वायु-मेघादयः सर्वे प्रकृतिधर्मं पालयन्ति । सृष्टिचक्रम् एव धर्मावलम्बि अस्ति'' इति

उक्तवान् शङ्करशास्त्री ।

एतत् श्रुत्वा राक्षसः गमनं स्थगयित्वा किञ्चित्कालं मौनेन स्थितवान् । अनन्तरं वेगेन अरण्याभिमुखं प्रस्थितवान् एव । एतत् दृष्ट्वा आश्चर्यम् अनुभवन् शङ्करशास्त्री उच्चस्वरेण तम् उक्तवान् - ''भोः दानवेन्द्र ! किमर्थं प्रतिगमनम् ? कुत्र गम्यते भवता ?'' इति । राक्षसः तु विना प्रतिवचनं वेगेन ततः निर्गतवान् एव ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् । दीर्घबाहुः राजा भवितुम् इच्छन् अरण्यं परित्यज्य शङ्करशास्त्रिणा सह राजधानीं प्रति प्रस्थितवान् आसीत् । किन्तु सुप्रतिभस्य विषयस्य श्रवणस्य अनन्तरं सः किमर्थं प्रतिगतवान् ? सुप्रतिभस्य शस्त्रनिपुणाः शिष्याः मारयेयुः इति किं भीतः सः ? अथवा 'स्वप्राणरक्षणार्थं शङ्करशास्त्री माम् अपाये पातयन् अस्ति' इति चिन्तितवान् स्यात् वा सः ? यद्येवं तर्हि शङ्करशास्त्रिणं खादितुम् अशक्ष्यत् सः । किन्तु तेन तदपि न कृतम् । किमर्थं तथा ? एतेषां प्रश्नानां समुचितम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''शङ्करशास्त्री यथा यथा सयुक्तिकं धर्मस्वरूपम् उक्तवान् तथा तथा राक्षसस्य ज्ञानं धर्मविषये विस्तृतम् । 'अरण्ये वासः वन्यपशूनां धर्मः यथा, नगरेषु ग्रामे च वासः मनुष्याणां धर्मः यथा, गुरोः ज्ञानदानं धर्मः यथा, तथैव राक्षसस्य धर्मः भवति - अरण्ये गुहायां वासः, न तु राजपदे स्थितिः' इति सः अवगतवान् । राजत्वप्राप्तीच्छा राक्षसधर्मविरुद्धः इति सः सम्यक् अवगतवान् । अतः एव सः अरण्यं प्रतिगतवान् । शङ्करशास्त्री ज्ञानदाता गुरुः । गुरोः पीडनम् अधर्मः इति चिन्तयन् सः शङ्करशास्त्रिणं न खादितवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भत्वा यथापूर्वं वृक्षशाखाम् अवलम्बितवान् ।





# बुद्धिमान् बालकः

हेलापुर्याः अशोकलालस्य पुत्रः माधवः यद्यपि अष्टवर्षीयः, तथापि सः महाबुद्धिमान् आसीत् । सर्वे तस्य बुद्धिमत्तां प्रशंसन्ति स्म ।

सर्वेषु विषयेषु तस्य बुद्धिमत्ता प्रशंसापात्रतां गता आसीत् । किन्तु आश्चर्यं नाम नाणकभेदज्ञाने तदीया बुद्धिमत्ता न प्रसरति स्म ।

कदाचित् काचित् घटना एवं प्रवृत्ता । अशोकलालस्य बन्धुः श्यामलालः कदाचित् आगतवान् । सः माधवस्य बुद्धिमत्ताविषये बहुधा श्रुतवान् आसीत् । सः माधवस्य बुद्धिमत्तां परीक्षितुम् इच्छन् एकं सुवर्णस्य अपरं ताम्रस्य च नाणकं हस्ते स्थापयित्वा – ''एतयोः यत् रोचते, यच्च भवान् अमूल्यं चिन्तयति, तत् स्वीकरोतु । तत् भवते एव'' इति उक्तवान् ।

माधवः ताम्रस्य नाणकं स्वीकृतवान् । एतत् दृष्ट्वा श्यामलालः हसन् उक्तवान् – ''सर्वे भवन्तं बुद्धिमन्तं वदन्ति । किन्तु भवान् तु ताम्ररजतनाणकयोः कतरत् श्रेष्ठम् इति एव न जानाति । अहो, मूर्खता भवतः'' इति ।

अनन्तरदिने ग्रामे सर्वत्र एषा वार्ता प्रसृता । 'माधवः बुद्धिमान् न, अपि तु मूर्खः । ताम्र-रजत-नाणकयोः किं मूल्यवत् इति सः न जानाति' इति ते परस्परम् उक्तवन्तः । वस्तुस्थितिं प्रत्यक्षं ज्ञातुं ते माधवस्य पुरतः ताम्ररजतनाणके गृह्णन्ति स्म । माधवः सर्वदा अपि ताम्रनाणकमेव स्वीकरोति स्म । जनाः तं मूर्खं वदन्तः हसन्ति स्म ।

पुनः कदाचित् अशोकलालस्य गृहं प्रति रामलालः आगतवान् । रामलालः अशोकलालस्य श्यालः । सः कानिचत् दिनानि तस्मिन् गृहे वासं कृतवान् । ग्रामीणानां



**ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।**
**निष्कृतिर्विहिता लोके कृतघ्ने नास्ति निष्कृतिः ।।**

*– पञ्चतन्त्रम्*

धर्मनिष्ठस्य मारकस्य, मद्यसेविनः, चोरस्य, भग्नव्रतस्य च विषये शास्त्रेषु प्रायश्चित्तं विहितम् । किन्तु कृतघ्नस्य विषये नास्ति क्षमा ।

मुखतः माधवस्य मूर्खता तेन श्रुता । सः अपि माधवस्य पुरतः रजतताम्रनाणके गृहीत्वा – 'अपेक्षितं स्वीकरोतु' इति उक्तवान् । माधवः ताम्रनाणकम् एव स्वीकृतवान् ।

एतत् दृष्ट्वा रामलालः अन्ये इव न उपहसितवान् । सः कुतूहलेन पृष्टवान् – "माधव ! भवतः बुद्धिमत्तायाः वार्ता मया बहुधा श्रुता । किन्तु भवान् तु ताम्रनाणकम् एव सर्वत्र स्वीकरोति ! बुद्धिमान् भवान् किं ताम्ररजतयोः मूल्यम् अपि न जानाति ?" इति ।

"जानामि एव" इति उक्तवान् माधवः ।

"तर्हि ताम्रनाणकम् एव किमर्थं स्वीक्रियते ?" इति पृष्टवान् रामलालः ।

तदा माधवः हसन् उक्तवान् – "माम ! यदि अहं रजतनाणकं स्वीकृतवान् स्यां तर्हि मया एकवारम् एकं रजतनाणकं प्राप्तं स्यात् । पुनः पुनः मम बुद्धिमत्तायाः परिक्षां कोऽपि न अकरिष्यत् । आदौ मया ताम्रनाणकं स्वीकृतम् । ततः मम परीक्षार्थं बहवः नाणकद्वयं मत्पुरतः गृहीतवन्तः । अतः इदानीं मया अनेकानि ताम्रनाणकानि सङ्गृहीतानि । तेषां मूल्यम् अनेकरजत-नाणकमूल्यात् अपि अधिकम् । इदानीं भवान् एव वदतु – अहं मूर्खः, उत बुद्धिमान् ?" इति ।

माधवस्य बुद्धिमत्तां ज्ञात्वा नितरां सन्तुष्टः रामलालः शिरश्चालनपूर्वकं तृप्तिं प्रकटितवान् ।



# चोरोऽपि हसितवान्

कस्मिंश्चित् ग्रामे कश्चन वाक्पटुः वामनः आसीत् । सः वाक्चातुर्येण विनोदेन च जनान् रञ्जयन् ग्रामेषु अटन् धनं सम्पाद्य जीवनं यापयति स्म । जनाः तं 'वामनभट्ट'नाम्ना एव निर्दिशन्ति स्म ।

कदाचित् सः स्वग्रामतः अन्यग्रामं प्रति गच्छन् आसीत् । आतपाधिक्यं तं बाधते स्म । अतः सः विश्रान्त्यर्थं वृक्षस्य अधः छायायाम् उपष्टिवान् । तं दृष्ट्वा कश्चन तत्समीपम् आगतवान् । सः परशुं गृहीतवान् आसीत् । तं दृष्ट्वा एव वामनभट्टः अवगतवान् यत् एषः चोरः इति । एतस्मात् कथञ्चित् आत्मा रक्षणीयः इति विचिन्त्य सः पूर्वाभिभाषिताम् अवलम्बमानः उक्तवान् - ''अहो ! भगवान् कीदृशः दयालुः ! सूर्यतापं कल्पितवान् सः विश्रान्त्यर्थम् उत्तमां छायाम् अपि कल्पितवान् अस्ति'' इति ।

एतत् श्रुत्वा चोरः उक्तवान् - ''भवान् वामनभट्टनामकः इति अहं जानामि । जनान् हासयन् भवान् प्रभूतं धनं सम्पादयति इत्यपि अहं जानामि । किन्तु एतत् वाग्जालं मत्पुरतः अकिञ्चित्करम् ! हास-विनोदादीनां द्वेषं करोमि अहम् । अद्यावधि मया न हसितम् एव । मम पिता वदति स्म यत् हासः विपत्तेः कारणम् इति । अतः हासोत्पादनप्रयत्नं परित्यज्य स्वसमीपे विद्यमानं सर्वं धनं विना विरोधम् अर्पयतु'' इति ।

एतावत् उक्त्वा सः वामनभट्टस्य धनग्रन्थिं वशीकृतवान् । ततः - ''भवान् बहुजनपरिचयवान् जनः । भवादृशस्य त्यागः मम वृत्तेः हानये स्यात् । अतः भवतः शिरः कर्तयिष्यामि'' इति सः उक्तवान् ।

तदा वामनभट्टः हस्तसङ्केतेन तदीयं प्रयत्नं निवारयन् - ''मित्र ! किमेतत् क्रियते भवता ? अलं साहसेन । अहं जन्मना एव वामनः । यदि भवान् मम शिरः कर्तयेत् तर्हि मदीयः आकारः पुनरपि ह्रस्वः भवेत् । जनाश्च माम् उपहसेयुः'' इति उक्तवान् ।

वामनभट्टस्य साभिनयम् एतत् कथनं श्रुत्वा अप्रयत्नेन एव चोरः हसितवान् । ततः सः - ''जन्मनि मम मुखे हासम् ऐदम्प्राथम्येन भवान् एव आनीतवान् । भवतः सामर्थ्यं दृष्ट्वा सन्तुष्टोऽस्मि । स्वीकरोतु एतत् उपायनत्वेन'' इति उक्त्वा वामनभट्टीयं धनग्रन्थिं तस्मै एव प्रत्यर्प्य ततः निर्गतवान् ।





# सुवर्णसिंहासनम्-२

*(हैवयवंशजः कौण्डिन्याधिपतिः राजा सारस्वतः स्वपराक्रमेण विशालं साम्राज्यं निर्मितवान् । किन्तु तदनन्तरकाले तद्वंशजाः तत् साम्राज्यं रक्षितुं समर्थाः न जाताः । यावत् दशमपरम्परीयः श्रीदत्तः राजा जातः तावत् सामन्तराजाः सर्वे स्वतन्त्राः जाताः आसन् । ते सर्वे सम्भूय इदानीं कौण्डिन्यदेशस्य उपरि आक्रमणं कर्तुं योजनां कुर्वन्तः आसन् । कौण्डिन्याधिपस्य श्रीदत्तस्य पुत्रः विजयदत्तः गुरुकुले अध्ययनं कुर्वन् आसीत् । विद्याभ्यासं समाप्य यावत् सः 'गुरोः अनुज्ञां प्राप्य मासानन्तरं प्रतिगन्तव्यम्' इति चिन्तयन् आसीत् तावता पित्रा प्रेषितः सन्देशः तेन प्राप्तः । सन्देशः आसीत् -'शीघ्रं प्रत्यागच्छतु' इति । राजधानीम् आगतं पुत्रं प्रतिवेशिराजानां चिन्तनं व्यवहारं च सङ्क्षेपेण उक्तवान् श्रीदत्तः । तदनन्तरम् .....)*

महाराजःकथनम् अनुवर्तितवान् - ''पुत्रः श्रीलेखाम् एव परिणेतुम् इच्छति यत् तत् अग्रे महतीं समस्यां जनयेत् इति चिन्तयति स्म मरालभूपतिः । सः पुत्रस्य अप्रसन्नताम् अपि न इच्छति स्म । अतः एतं विषयं राजनैतिकदृष्ट्या द्रष्टुम् इष्टवान् सः । तदर्थं सः कालिन्दीनरेशस्य माधवसेनस्य अन्तरङ्ग-जीवनम् अधिकृत्य विवरणं सङ्गृहीतवान् ।''

''गुप्तचराणां द्वारा तेन ज्ञातम् - 'इन्दु-मत्याः स्वंयवरार्थं माधवसेनस्य निमन्त्रणम् औपचारिकतापालनमात्रोद्देशेन कृतम् आसीत् । इन्दुमत्याः परिणयविषये माधव-सेनस्य विशेषास्था काऽपि न आसीत् । किन्तु सा यदा वरणमालां कण्ठे अर्पितवती तदा सः अनन्यगतिकतया विवाहम् अङ्गीकृतवान् । एतस्मात् विवाहात् पूर्वं कालिन्दी-कौण्डिन्य-देशयोः सम्बन्धः सुमधुरः न आसीत् । यद्यपि विवाहानन्तरं स च सम्बन्धः उत्तमः जातः, तथापि इन्दुमत्याः मरणस्य अनन्तरं माधव-सेनेन यदा वसुमती परिणीता तदा सः सम्बन्धः औपचारिकतामात्रतां गतः अस्ति । अधिकारसम्पन्त्योः विषये माधवसेनस्य

महत्त्वाकाङ्क्षा अस्ति एव' इति ।''

''माधवसेनस्य एतस्य दौर्बल्यस्य लाभस्य स्वीकरणार्थं मरालभूपतिः योजनां कृतवान् । माघशुक्लसप्तम्यां प्रचलिष्यमाणायाः कुलदेवस्य भास्करस्य रथयात्रायाः अवसरे माधवसेनः तेन अतिथिरूपेण निमन्त्रितः ।''

''चम्पकराज्येन इतः पूर्वं कदापि एतादृशं निमन्त्रणं न कृतम् आसीत् । अतः निमन्त्रणप्राप्तितः नितराम् आश्चर्यचकितः अभवत् माधवसेनः । तथापि उत्सवः भगवतः भास्करस्य आसीत् इत्यतः सपरिवारं गतवान् सः । चम्पकराज्ये प्रतिवर्षम् एषा रथयात्रा महता वैभवेन प्रचाल्यते स्म । पारम्पर्यक्रमेण तस्मिन् दिने भगवतः सूर्यदेवस्य सुवर्णविग्रहः अलङ्कृते रथे स्थाप्यते । ततः युवराजः, राज्ञा सूचिताः परिवारीयाः पञ्च प्रमुखजनाः च राजमार्गे तं रथम् आकृष्य नयन्ति ।''

''यथापूर्वम् एतस्मिन् अपि वर्षे उत्सवः आयोजितः आसीत् । विशाले रथे भगवतः सूर्यस्य सुवर्णप्रतिमा स्थापिता । रथस्य आकर्षणार्थं सप्त रज्जवः अपि योजिताः । उत्सवारम्भे मरालभूपतिः उद्घोषितवान्- 'कालिन्दीनरेशः विशिष्टातिथिरूपेण उपस्थितः अस्ति, सोऽपि रथाकर्षणकार्ये उद्युक्तः भवति । विशिष्टातिथिरूपेण उपस्थितः सन् माधवसेनवर्यः महोत्सवं, राजपरिवारं चापि अनुगृहीतवान् अस्ति । अहं माधवसेनवर्यं सानुरोधं निवेदयामि यत् भगवतः भास्करस्य रथस्य आकर्षणे सर्वप्रथमं हस्तः प्रसारणीयः इति ।''

मरालभूपतिः रथरज्जुं माधवसेनस्य कटौ बद्धवान् । रथयात्रायाः अनन्तरम् अतिथिसम्मानार्थं भोजोत्सवः व्यवस्थापितः । एतत्सर्वं दृष्ट्वा माधवसेनः नितरां प्रसन्नः कृतज्ञताभारलज्जितः च अभवत् । भोजोत्सवस्य अन्ते सः प्रशंसावचनैः मरालभूपतये कृतज्ञतां समर्पितवान् । किन्तु तत्समये मरालभूपतिः विशेषावधानरहितः इव लक्ष्यते स्म । एतस्मात् माधवसेनः किञ्चिदिव आश्चर्यचकितः ।

अतः सः एकान्तसमये मरालभूपतिं पृष्टवान् - ''राजन् ! कृतस्य सम्माननस्य निमित्तम् अहं भोजनान्ते यदा कृतज्ञतां समर्पयन् आसं तदा भवान् अन्यमनस्कः इव आसीत् । मत्तः कोऽपि लोपः न कृतः स्यात्



खलु ?'' इति ।

तदा मरालभूपतिः आश्चर्येण उक्तवान् - ''शान्तं, पापम् । किम् एतत् वदति भवान् ! भवान् तु अस्माकं सम्मान्यः अतिथिः । भवतः उपस्थितौ अहं कथं वा अन्यमनस्कतां प्रदर्शयेयम् ? तादृशम् असौजन्यं मया कथं वा प्रदर्श्येत ? वस्तुतः तदवसरे कश्चन विचारः मां बाधते स्म । अहं किमपि वक्तुम् इच्छामि स्म । अतः भवता तादृशः भावः प्राप्तः स्यात् ।''

माधवसेनः उक्तवान् - ''किं वक्तुम् इच्छति स्म भवान् ? निस्सङ्कोचं वदतु तावत्'' इति ।

''मया यत् वक्तुम् इष्यते तत् भवतः सम्मतं स्यात् वा न वा इति मम सन्देहः । तत् यदि न सम्भवेत् तर्हि भवतः मनसि 'सम्माननं कृतवताम् अल्पा आशा अपि मया न पूरिता' इति भावः शाश्वतिकतया तिष्ठेत् । अतः अहं तदा तत् न कथितवान् ...'' इति वदन् मरालभूपतिः माधवसेनं वाग्जाले पातयितुं सन्नाहं कृतवान् ।

''मनसि यत् अस्ति तत् वदतु तावत्'' इति हसन् उक्तवान् माधवसेनः ।

सङ्कोचं प्रदर्शयन् उक्तवान् मरालभूपतिः - ''विषयः तु एतावान् एव । मम पुत्रः भवतः पुत्र्याः रूपगुणादिविषयं श्रुतवान् अस्ति । ततः आरभ्य तस्य मनसि प्रबला इच्छा उत्पन्ना अस्ति यत् सा एव परिणेतव्या इति । तदा मया उक्तं यत् 'कौण्डिन्यदेशस्य राजकुमारः विवाहयोग्यवयस्कः अस्ति, तस्मै एव पुत्री दातव्या इति माधवसेनः निर्णीतवान्



अपि स्यात् एतावता' इति । तदा मम पुत्रेण उक्तं - 'कौण्डिन्यदेशः पूर्ववत् सार्वभौमत्वं रक्षितवान् नास्ति । वस्तुतः तु कालिन्दीदेशस्य यावत् तावती अपि शक्तिः नास्ति कौण्डिन्यस्य । असमर्थराजानां कारणतः स च देशः क्षीणशक्तिः जातः अस्ति । अतः श्रीलेखायाः अनुरूपः योग्यः च वरः सर्वथा न विजयदत्तः । रूपयौवनादीनां विषये वीराणाम् एव अधिकारः । यदि सा मया परिणीता भवेत् तर्हि अहं समग्रं दक्षिणापथम् एव जित्वा तां साम्राज्ञीपदे प्रतिष्ठापयिष्यामि । पुत्रहीनं तस्याः पितरं वात्सल्येन प्रेम्णा आदरेण च द्रक्ष्यामि । कौण्डिन्यदेशं जित्वा अर्धभागं श्वशुराय समर्पयिष्यामि च' इति ।''

एतावत् उक्त्वा मरालभूपतिः मौनम्

आश्रितवान् । एतत् श्रुतवतः माधवसेनस्य का प्रतिक्रिया इति चिन्तयन् सः माधवसेनस्य मुखं निर्निमेषं पश्यन् उपविष्टवान् ।

माधवसेनः कदापि न चिन्तितवान् आसीत् यत् मरालभूपतेः मनसि एतादृशः अपि कश्चन विचारः स्यात् इति । अतः सः एतं प्रस्तावं श्रुत्वा नितराम् आश्चर्यचकितः ।

किन्तु प्राप्यमाणः लाभः यदा मनसि आगतः तदा तस्य मनसि प्रलोभनम् उत्पन्नम् । कौण्डिन्यदेशे अपारः धनराशिः निधिरूपेण अस्ति इति सः जानाति स्म । कौण्डिन्यदेशस्य असुरक्षितस्थितिम् अपि सः ज्ञातवान् आसीत् । धनाशा, महत्त्वाकाङ्क्षिता, सार्वभौमत्वप्राप्तीच्छा च तं दुराशाग्रस्तम् अकुर्वन् ।

ततः तयोः मध्ये दीर्घकालं यावत् वार्तालापः प्रवृत्तः । महता वाक्चातुर्येण मरालभूपतिः माधवसेनं वशीकृतवान् । आत्मना आरचितस्य कुतन्त्रस्य सहभागिनं कृतवान् च । माघमासे तयोः सन्धिः प्रवृत्तः । तत्काले भवतः षण्मासात्मकम् अध्ययनम् अवशिष्टम् आसीत् । मासानन्तरं यद्यपि भवतः अध्ययनं समाप्तं भविष्यति तथापि भवद्गुरुः कृष्णचन्द्रवर्यः चिन्तयति यत् नवरात्रोत्सवस्य अनन्तरम् एव राजधानीं प्रति भवतः प्रेषणम् इति । एषः विषयः मरालभूपतिना अपि कथञ्चित् ज्ञातः । अतः भवतः प्रत्यागमनतः पूर्वम् एव अस्मद्-राज्यस्य उपरि आक्रमणं करणीयम् इति तेन सङ्कल्पः कृतः । माधवसेनः प्रतिवर्षं चैत्रमासे वसन्तोत्सवस्य अवसरे अस्मद्राज्यं प्रति आगमिष्यति । एतस्मिन् अपि वर्षे सः अवश्यम् आगमिष्यति । किन्तु तस्य आगमनं विषयसङ्ग्रहार्थं भविष्यति । सैन्यबलादि-विवरणं सङ्ग्रहीतुं तस्य आगमनम् । तेषां कुतन्त्रस्य एकः भागः अयम् । वैशाखे ज्येष्ठे च कालिन्दी-चम्पक-कुन्दराज्यानां सैन्यम् एकत्रीकृत्य प्रशिक्षणं दीयते । आषाढे तु आतपः न्यूनः भविष्यति । आकाशः मेघैः आच्छन्नः भविष्यति । वर्षाऋतोः आरम्भश्च भविष्यति । गुप्तरूपेण सेनां सज्जीकर्तुं आक्रमणं कर्तुं च अयं सुयोग्यः कालः । अतः तत्काले ते सर्वे



सम्भूय अस्मद्राज्यस्य उपरि आक्रमणं करिष्यन्ति ।''

''अद्य ज्येष्ठशुक्ल-एकादशी । एतावता त्रयाणाम् अपि सैन्यानां युद्धसन्नाहः समाप्तप्रायः स्यात् । अचिरात् एव अस्माकं जन्मभूमिः रणरङ्गं भविष्यति । एतादृशी विलक्षणा स्थितिः अकस्मात् आपतिता इत्यतः मया भवान् आनायितः । भवतः आनयनात् ऋते अन्या गतिः न आसीत् मम । अनन्यगतिकः अहं निराशया विधिविलसितं निर्विरोधम् अङ्गीकर्तुं सिद्धः आसम् । किन्तु राजगुरुः शिवानन्दः मयि नवाम् आशाम् उत्साहं च उद्भावितवान् अस्ति । ....''



''गुप्तचराणां द्वारा मया यदा शत्रूणां कुतन्त्रं ज्ञातं तदा अहं भवतः भावि-जीवनविषये आतङ्कग्रस्तः अभवम् । अतः भवतः जन्मकुण्डली मया गुरुवर्याय दर्शिता । गुरुवर्यः तां दीर्घकालं यावत् सुसूक्ष्मं परिशील्य मौनम् आश्रितवान् । ध्यानावस्थायां निमग्नः अभवत् च । सः अन्तर्दृष्ट्या उदितस्य सूर्यस्य बिम्बं, तीव्रगत्या गच्छन्तं नागराजं, तेजोमयतया प्रकाशमानं सुवर्णं, षट् सुन्दर-कन्यकाः च अपश्यत् ।''

''एतेषां प्रतीकाणां पृष्टभूमिकां विवृण्वन् सः उक्तवान् - 'युवराजस्य जन्मकुण्डली विलक्षणा अस्ति । इदानीं सः सङ्कटग्रस्तः अस्ति । प्राणापायसम्भावना अपि दृश्यते । किन्तु बलशालिनां ग्रहाणाम् अनुग्रहात् अन्तिमविजयः तस्यैव भविष्यति । पूर्णिमातः पूर्वम् अत्र तस्य उपस्थितिः वरम् । जन्मकुण्डल्यनुगुणं ज्ञायते यत् अचिरात् एव सः निधिं प्राप्स्यति इति । 'तस्य उपस्थितौ राजधान्याः पूर्वदिशि स्थितस्य अङ्गणप्रदेशस्य खननं करणीयम्' इति सः सूचितवान् अस्ति । खननं कुत्र स्यात् इति तु मन्त्रजलप्रोक्षणेन गुरुवर्यः निर्देक्ष्यति ।''

''अतः एव मया त्वरया भवान् आनायितः । सौभाग्यवशात् भवान् समये उपस्थितः अस्ति । पूर्णिमादिने एव खननस्य आरम्भः करणीयः भवेत् ।''

इत्येवं सर्वं विजयदत्तं विस्तरेण उक्त्वा दीर्घं निश्श्वसितवान् श्रीदत्तः ।

''किन्तु तात ! युद्धसम्भावनामेघेषु दृश्यमानेषु, शत्रुषु परितः स्थितेषु निधिप्राप्त्यर्थं प्रयासः किम् उचितः ? तदर्थं समयस्य अपव्ययः किम् अस्माकम् अविवेकितां न



दर्शयेत् ?'' इति पृष्टवान् विजयदत्तः ।

''मया अपि गुरुवर्यस्य शिवानन्दस्य पुरतः एषः एव सन्देहः प्रकटितः आसीत् । केनचिदपि कारणेन खननस्य दूरीकरणं न युज्यते । खननारम्भतः एव देशस्य हितं सेत्स्यति इति वदति सः । सः वदति यत् एतत्कार्यार्थं त्रीणि दिनानि पर्याप्तानि इति । अतः गुरुवर्यस्य आदेशस्य पालनम् एव क्षेमकरम् इति निश्चितं मया'' इति उक्तवान् श्रीदत्तः ।

विजयदत्तः पितुः वचनं श्रुत्वा सन्तुष्टः सन् अवदत् - ''वयं धर्मं, न्यायं, सत्यं च पालयन्तः जन्मभूमेः रक्षणार्थं यथाशक्ति प्रयत्नं करवाम । अन्ततः सत्यपक्षस्य एव जयः भविष्यति इति विश्वासेन वयं कार्ये प्रवृत्ताः भवाम । प्राणान् पणीकृत्य वयं देशरक्षणकार्ये उद्युक्ताः भवाम'' इति ।

विजयदत्तस्य चिन्तनं श्रीदत्ते तृप्तिम् अजनयत् । यतः तस्य वचनानि उदात्त-दृष्टिप्रतिपादकानि आसन् । 'स्वस्थचित्ततया परिस्थितेः अवगमनार्थं मम पुत्रस्य सामर्थ्यम् अस्ति' इति अवगतवान् श्रीदत्तः । भाविन्याः विपत्तेः विवरणं धैर्येण, शान्ततया, गाम्भीर्येण, परमासक्त्या च श्रुतवान् आसीत् विजयदत्तः । श्रवणानन्तरम् अपि विना सम्भ्रमं संयतचित्ततया प्रतिक्रियां दर्शितवान् आसीत् सः । 'एतत्सर्वं तस्य व्यक्तित्वस्य योग्यतां दर्शयति । साम्राज्याधिपे ये गुणाः भवेयुः ते सर्वे एतस्मिन् दृश्यन्ते । कृष्णचन्द्रवर्यस्य परिश्रमस्य फलम् एतत्' इति चिन्तितवान् श्रीदत्तः ।

अत्रान्तरे द्वारपालः आगत्य निवेदितवान्

– ''महाराज ! कश्चन युवकः भवता त्वरया मेलितुम् इच्छति । 'लक्ष्मीदेव्याः पत्रम् आनीतम् अस्ति मया' इति वदति सः'' इति ।

'तम् अन्तः प्रवेशयतु' इति सङ्केतेन सूचितवान् श्रीदत्तः । युवकः अन्तः आगत्य विजयदत्तस्यापि तत्र उपस्थितिं दृष्ट्वा क्षणकालं दिग्भ्रान्तः । विजयदत्तः आगतं जनं क्षणकालं निर्निमेषं दृष्ट्वा उक्तवान् – ''तात ! लक्ष्मीदेव्याः पत्रम् आनीतवान् अयं स्त्रीजनः अस्ति । तन्नाम एषा स्वयं श्रीलेखा एव'' इति ।

महाराजः द्वित्राणि पदानि अग्रे स्थापयित्वा धर्मभगिन्याः पुत्रीं भाविस्नुषां प्रीत्या आलिङ्ग्य अपृच्छत् – ''वत्से ! अपि कुशलम् ? एकाकिन्या एतेन वेषेण कथम् अत्र आगतम् ?'' इति ।

''मातुः आदेशं शिरसा वहन्ती अहम् अत्र उपस्थिता अस्मि । विलक्षणपरिस्थितौ अनन्यगतिकतया अहं भवन्तं शरणं गता अस्मि । अबलायाः मम रक्षणं भवतः दायित्वम् । धर्मदृष्ट्या अहं भवतः पुत्री इव । सामाजिकसम्बन्धदृष्ट्या न्यासीभूता अस्मि'' इति श्रीलेखा उक्तवती अश्रूणि स्रावयन्ती ।

श्रीलेखायाः वचनानि श्रुत्वा राजा विह्वलचित्तः जातः । 'भाविन्याः विपत्तेः सूचनां प्राप्य वसुमती एतादृशम् अपायबहुलम् अपि पदं निक्षेप्तुम् उद्युक्ता जाता स्यात्' इति तेन निर्णीतम् ।

अतः सः सान्त्वनस्वरेण श्रीलेखाम् उक्तवान् – ''वत्से ! भवत्याः माता भवतीं योग्यस्थानं प्रति एव प्रेषितवती अस्ति । वस्तुतः एतत् भवत्याः एव गृहम् । अत्र वासं कर्तुम् अस्ति एव भवत्याः अधिकारः ।



अतः अलं दैन्येन, भीत्या वा'' इति ।

यत् इदानीम् आकस्मिकतया प्रवृत्तं तद्विषये सन्तोषम् अनुभवन् सः विजयदत्तम् उक्तवान् - ''वत्स ! यस्य प्राप्त्यर्थं वयं बहुधा चिन्तनं कुर्वन्तः अनेकान् प्रयत्नान् करिष्यामः, तदेव कदाचित् भगवदनुग्रहेण आकस्मिकतया सम्प्राप्तं भवति । श्रीलेखा स्वयम् अत्र उपस्थिता अस्ति यत् तत् शुभं सङ्केतयति । वयं क्षत्रियाः । क्षत्रियाणाम् अस्माकं गान्धर्वविवाहः शास्त्रसम्मतः । एतादृश-परिस्थितौ अन्यः मार्गः अस्मत्पुरतः नास्ति । श्वः किं भविष्यति इति कोऽपि वक्तुं न शक्नोति । अतः मम तु भाति यत् गान्धर्व-विधिना भवतोः परिणयः इदानीम् एव भवति चेत् वरम् इति'' इति ।

अनन्तरं सः श्रीलेखां पश्यन् पृष्टवान् - ''वत्से ! एतद्विषये भवत्याः आशयः कः ?'' इति ।

महाराजस्य वचनं श्रुतवत्याः श्रीलेखायाः मुखं विकसितं जातम् । प्रतिकूलपरिस्थितेः कारणतः यत् हस्तच्युतं भावितम् आसीत् तदेव इदानीं सुलभलभ्यं जातम् आसीत् । विना विघ्नम् एतावच्छीघ्रं कथं मया अत्र प्राप्तम् इति सा एव स्वयं न जानाति । सा अनुरागपूर्णदृष्ट्या विजयदत्तं कटाक्षेण सकृत् दृष्ट्वा लज्जया शिरः अवनमितवती ।

विजयः पितुः मुखं दृष्टवान् । आपतिष्यतः अनिष्टस्य विषये चिन्ता, वर्तमानस्य विषये आनन्दः च श्रीदत्तस्य नेत्रयोः दृश्यते स्म । ''यथा भवान् वदति तथा '' इति विनयेन उक्तवान् विजयदत्तः ।

पुत्रस्य अनुज्ञां श्रुत्वा आनन्दतुन्दिलः महाराजः - ''शुभस्य शीघ्रम् । गान्धर्व-विवाहनिमित्तं सङ्कल्पकालः एव सुमुहूर्तः'' इति उक्त्वा श्रीलेखायाः हस्तं विजयदत्तस्य हस्ते अर्पितवान् । पाणिग्रहणानन्तरं उभौ अपि महाराजं पादस्पर्शपूर्वकं नमस्कृत्य आशीर्वादं प्राप्तवन्तौ । - *(अनुवर्तते)*



# मातृभाषां स्मृतवान् पण्डितः



कमलकुण्डनामके ग्रामे कोऽपि विद्यालयसोपानं न आरूढवान् आसीत् । अतः काशीं गत्वा शास्त्राध्ययनं ते स्वप्ने अपि चिन्तयितुं न अर्हन्ति स्म । जीवनेन्द्रः नाम पार्श्वग्रामीणः एतत् साधितवान् एव । मातुलं द्रष्टुं सः तदा तदा कमलकुण्डं प्रति आगच्छति स्म ।

काशीतः आगतं जीवनेन्द्रं द्रष्टुं जनाः नितरां समुत्सुकाः आसन् । तच्च साप्ताहिकवाणिज्यदिनम् । विविधवस्तूनि क्रेतुं विक्रेतुं च जनाः वाणिज्यस्थले सम्मिलिताः आसन् । तत् स्थलं प्रति जीवनेन्द्रः आगच्छति इति वार्ता प्रसृता आसीत् । अतः

सर्वे तस्य आगमनं कुतूहलेन प्रतीक्षमाणाः आसन् ।

अन्ते सूर्यास्तसमये सः आगतः । तं दूरात् एव दृष्ट्वा जनाः रोमाञ्चिताः । सः श्वेतां वेष्टीं, काषायवर्णीयं युतकं च धृत्वा उत्तरीयं स्कन्धयोः स्थापितवान् आसीत् । श्मश्रुलः सः पाण्डित्यसूचकम् उष्णीषं धृतवान् आसीत् । कण्ठे रुद्राक्षमाला विराजते स्म । दर्शनेन सः विवाहार्थं सिद्धः वरः इव दृश्यते स्म ।

जनाः तं भक्त्या नमस्कृतवन्तः । सः सर्वेषां शिरसि दक्षिणहस्तं संस्थाप्य मन्दहास-पूर्वकम् आशीर्वादं कृतवान् । तेनैव सह कांश्चन आशीर्वादमन्त्रान् अपि उक्तवान् । मन्त्रणां श्रवणात् जनाः रोमाञ्चिताः जाताः । महापण्डितस्य मेलनम् आशीर्वादप्राप्तिः च सौभाग्यकारकम् इति ते सर्वे चिन्तितवन्तः ।

ते तेन सह वार्तालापं कर्तुम् इष्टवन्तः । किन्तु सः यत् वदति तत् कोऽपि अवगन्तुं न शक्नोति स्म । यतः तस्य भाषा प्रौढा भवति स्म, अन्यथा आंग्लभाषया वदति स्म सः । अतः कश्चन ग्रामीणः धैर्येण तं स्मारितवान् – ''भवतः पाण्डित्यपूर्णां संस्कृतभाषां वयं न अवगच्छामः । आंग्लवाक्यानाम् अपि सा एव स्थितिः । अतः एतैः ग्रामीणैः सह ग्राम्यभाषया एव व्यवहरतु'' इति ।

एतत् अङ्गीकृत्य जीवनेन्द्रः ग्राम्यभाषया वक्तुं प्रयत्नं कृतवान् । किन्तु द्वित्रनिमेषाभ्यन्तरे एव सः प्रौढशैलीम् आंग्लभाषां च आश्रितवान् । अतः जनाः चिन्तितवन्तः – 'पञ्चवर्षाभ्यन्तरे एषः मातृभाषाम् अपि विस्मृतवान् अस्ति' इति ।

'कश्चित् पञ्चवर्षाभ्यन्तरे एव कथं मातृभाषां विस्मर्तुम् अर्हति ? पाण्डित्यमदः एतं बाधते । अतः अयम् एवं व्यवहरति' इति केचन परस्परवार्तालापं कृतवन्तः ।





यत्र युवकः स्थितः आसीत् ततः अनतिदूरे केचन मेषयुद्धदर्शने निरताः आसन् । युद्धनिरतः कश्चन मेषः पण्डितम् अपश्यत् । पण्डितस्य वेषः तस्य कोपम् अवर्धयत् प्रायः । सः युद्धार्थं सन्नद्धः सन् क्रोधेन शिरः अवनमितवान् ।

नतशिरस्कान् सर्वदा आशीर्वादेन अनुगृह्णाति स्म खलु पण्डितः ? अतः एतदवसरे अपि सः - 'मेषः आशीर्वादम् इच्छति' इति चिन्तयित्वा हस्तम् उन्नीय आशीर्वादार्थं सिद्धः सन् अतिष्ठत् ।

केचन दूरस्थाः - 'अपसरतु पण्डितवर्य !' इति वदन्तः उच्चैः कोलाहलं कृतवन्तः । किन्तु आशीर्वादासक्तमनस्कः पण्डितः एतत् न श्रुतवान् एव । अत्रान्तरे क्रुद्धः सः मेषः हूङ्कुर्वन् वेगेन आगत्य मुखेन घट्टयित्वा पण्डितम् अधः अपातयत् एव ।

भूमौ पतितः पण्डितः नितरां कुपितः । सः कोपवशात् निरन्तरतया मातृभाषया तं मेषम् अवाच्यशब्दैः निन्दितवान् । 'मया पाण्डित्यानुगुणः व्यवहारः क्रियमाणः नास्ति' इति यावत् सः अवगतवान् तावता कालः अतीतः आसीत् । तस्य गतिं सर्वे दृष्टवन्तः आसन् एव ।

''पण्डितवर्य ! अस्माकं दुःखम् अस्ति यत् वराकः एषः मेषः भवता सह कथं व्यवहरणीयम् इति न जानाति इति । एतस्मिन् एव अवसरे अस्माकं सन्तोषः अपि अस्ति यत् भवान् वस्तुतः मातृभाषाम् एतावता अपि न विस्मृतवान् इति'' इति कश्चन तरुणः अन्यान् हास्यपूर्वकं पश्यन् उक्तवान् ।

पण्डितः लज्जितः सन् किमपि अवदन् वस्त्रे संलग्नां धूलिम् अपसारयन् ततः निर्गतवान् ।

**श्रेष्ठसंस्कृत्याः पृष्ठभूमिकावगतिः -**
**सत्यान्वेषणार्थं प्राचीनैः कृताः यत्नाः**

# सरस्वतीतीरे...

''किं भवता एषा वार्ता पठिता, पितामह ?'' इति पृच्छन् धावन् देवनाथस्य समीपम् आगतवान् सन्दीपः । दण्डहस्तः देवनाथः वायुविहारार्थं नदीतीरं प्रति प्रस्थितवान् आसीत् । सूर्यास्तसमयः सः । मन्दवायुः मनः आह्लादयति स्म । सुन्दरसन्ध्या जगत् मोहयति स्म ।

देवनाथवर्यः गमनं स्थगितवान् । आवृत्तिजीवनं इतिहासः बोधितः आसीत् तेन । भारतेतिहासविषये विशेषशोधाः अपि तेन कृताः आसन् । उत्तमाः बहवः शिष्याः आसन् तस्य । किन्तु सन्दीपसदृशः जिज्ञासुः शिष्यः इतः पूर्वं न प्राप्तः आसीत् तेन । सन्दीपः माध्यमिकशालायाः विद्यार्थी । किन्तु तस्य आसक्तिः आ पातालात् आगगनम् सर्वेषु विषयेषु ।

विश्वविद्यालयस्य कुलपतित्वेन कार्यं कृत्वा निवृत्तिं प्राप्य सुखजीवनं यापयतः देवनाथवर्यस्य पर्याप्तमात्रेण समयः आसीत् पौत्रस्य ज्ञानपिपासां शमयितुम् । बालकः यत् पृच्छति तस्य उत्तरं दातुं न शक्तं चेत् सः ग्रन्थान् परिशील्य उत्तरं प्राप्नोति स्म । समृद्धः ग्रन्थालयः तस्य गृहे आसीत् एव । देवनाथवर्यः प्रान्स्देशीयस्य चिन्तकस्य वाल्टेरस्य वचनं सदा उद्धरति स्म - ''यावत् अधिकम् अहं पठामि तावतः मननम् अपि करोमि । यथा यथा अधिकाधिकम् अहं जानामि तथा तथा अहम् अवगच्छामि यत् मया ज्ञातम् अत्यल्पम् इति'' इति ।

देवनाथविषये सन्दीपस्य महती श्रद्धा आसीत् । पितामहसम्बन्धि वात्सल्यं तु तस्मिन् आसीत् एव । सन्दीपस्य अतिज्येष्ठः सुहृद्, मार्गदर्शकः, चिन्तनप्रवर्तकः च आसीत् देवनाथवर्यः ।

''वत्स ! मदर्थं का आश्चर्यकरी वार्ता आनीता अस्ति भवता ?'' - देवनाथवर्यः वात्सल्येन अपृच्छत् ।

''तात ! अस्माकं प्राचीनसाहित्ये पवित्रायाः सरस्वतीनद्याः वर्णनं दृश्यते । किन्तु सा नदी तु न दृश्यते देशे कुत्रापि । कदाचित् कश्चन प्रसिद्धवक्ता उक्तवान् आसीत् यत् सा नदी भारते कुत्रापि न आसीत् एव इति । किन्तु एतस्यां पत्रिकायां प्रकाशिता वार्ता वदति यत् 'लेण्ड्स्टेट्'नामकेन उपग्रहेण सरस्वतीनद्याः पात्रस्य (मार्गस्य) चित्राणि स्वीकृतानि इति । हिमालयात् उद्भूतायाः तस्याः वैशाल्यं १४ कि. मी. विस्तृतम् आसीत् इति ज्ञायते ।''

# -गाथा

''सत्यम् एव एतत् वत्स ! केभ्यश्चित् वर्षेभ्यः पूर्वं पुरातत्त्ववैज्ञानिकः पाल्हेनरी फ्रेङ्क्फर्ट्नामकः सरस्वत्याः विषये पूर्णशोधं कृतवान् अस्ति । 'एषा नदी चतुस्सहस्त्रधिक-वर्षेभ्यः पूर्वम् एव दीर्घायाः अनावृष्टेः कारणतः शुष्कतां गता' इति सः अभिप्रैति । दृषद्वत्याः अपि एषा एव दशा जाता इति श्रूयते ।''

''एवं स्थिते अपि केचन तस्याः अस्तित्वम् एव निराकुर्वन्ति यत् तत् तु महते आश्चर्याय एव खलु ?''

''आश्चर्यं किम् अत्र ? भारतीयस्य इतिहासस्य बहूनाम् अंशानां विषये वयम् अज्ञानिनः । शतशः वर्षाणि अस्माभिः दास्यजीवनं कृतम् । शोध-अनुसन्धानादिक्षेत्रेषु अस्माभिः परिश्रमः न कृतः । किन्तु पाश्चात्याः अध्ययनशीलाः एतत्क्षेत्रे बहुकार्याणि कृतवन्तः । ते अमूल्यान् ताडग्रन्थान् अन्विष्य ग्रन्थान् प्रकाशितवन्तः । तत्काले तैः अनुचितम् अपि किञ्चित् कृतम् । तैः मिथ्यासिद्धान्ताः अपि केचन प्रतिपादिताः । ते उक्तवन्तः यत् आर्याः भारतम् आक्रम्य मूलनिवासिभिः द्राविडैः सह युद्धं कृतवन्तः इति । अस्मद्देशीयाः इतिहासकाराः अध्यापकाः च सत्यासत्यताम् अपरिशील्य एतं सिद्धान्तम् अङ्गीकृतवन्तः । इतिहास-पुस्तकानि एतम् एव सिद्धान्तम् अबोधयन् । किन्तु अद्य विद्वांसः अवगतवन्तः सन्ति यत् एतस्य वादस्य समर्थकं प्रमाणं किमपि सर्वथा नास्ति इति । किन्तु एतावता भारते महती हानिः जाता आसीत् एव । आर्यद्राविडभेदः अत्र उत्पन्नः'' - देवनाथवर्यः विवृतवान् ।

''यदा नदी शुष्का जाता तदा तस्याः तीरे वसतां का गतिः जाता ?'' - कुतूहलेन पृष्टवान् सन्दीपः ।

एतावता तौ नदीतीरं प्राप्तवन्तौ आस्ताम् । देवनाथवर्यः उत्साहेन उक्तवान् - ''तैः कष्टं प्राप्तम् । किन्तु एतत् कष्टम् अकस्मात् आपतितं तु न । ते नूतनवसतिम् अन्विष्यन्तः इतस्ततः गतवन्तः । विशाले देशे तदा स्थानाभावः तु न आसीत् । किन्तु सरस्वतीनदीतीरे या संस्कृतिः विकसिता, यत् साहित्यं रचितं तत् तु अपूर्वम् । ततः अस्माकं



देशः गौरवास्पदं जातः । तैः निर्मितं साहित्यं 'वेद'शब्देन निर्दिश्यते ।''

''यत्र यत्र गतं तत्र सर्वत्र किं तैः ते ग्रन्थाः नीताः ?''

देवनाथवर्यः हसन् उक्तवान् - ''आम् । तैः वेदाः नीताः - स्मृतौ संस्थाप्य, न तु लिखितग्रन्थरूपेण । यद्यपि तत्काले लेखनक्रमः विकसितः आसीत्, तथापि तैः वेदानां परिरक्षणार्थं कण्ठस्थीकरणक्रमः एव आदृतः । वेदवाङ्मयं चतुर्धा — ऋग्-यजुः-साम-अथर्वभेदेन ।''

''सुमहान् वेदराशिः तैः कण्ठस्थीक्रियते स्म इति तु महते आश्चर्याय'' - सन्दीपः अवदत् ।

''आश्चर्यं तु अस्माकम् । तैः एतत् कथं



साधितम् इति अवगन्तव्यं चेत् तेषां जीवनशैली अवगन्तव्या अस्माभिः । लुप्तसंस्कृतेः सर्वे जनाः वेदज्ञाः भवन्ति स्म एव इति न । ये वेदज्ञाः भवन्ति स्म ते 'मुनि'शब्देन निर्दिश्यन्ते स्म । ते समाज-शिक्षकाः आसन् । अपूर्वाम् चित्तैकाग्रतां धारणाशक्तिं च सम्पादितवन्तः आसन् ते । उदात्तादिस्वरयुक्तत्वेन वेदाः उच्चार्यन्ते स्म तैः । वेदरक्षणार्थं ते पद-धन-जटादीन् पाठक्रमान् आश्रयन्ति स्म । अतः वेदस्य शुद्धता तैः परिरक्षिता ।''

''एतावान् क्लेशः तैः किमर्थम् उह्यते स्म तात ?''

''सहजः अस्ति भवतः अयं प्रश्नः । वयं कस्यचित् लाभस्य आनन्दस्य वा निमित्तं कार्यं कुर्मः । किन्तु ऋषयः तादृशाः न आसन् । तेषां लाभादिदृष्टिः न आसीत् । ते जिज्ञासवः आसन्, सत्यान्वेषकाः आसन् । जीवनस्य समस्यानां परिहारस्य चिन्तकाः आसन् ते । जीवनस्य उद्देशः कः ? मरणानन्तरं जीविनः का गतिः ? दुःखं किमर्थं प्राप्यते अस्माभिः ? इत्यादीनां प्रश्नानाम् उत्तरम् अन्विष्यन्ति स्म ते । तेषाम् उत्तरं वेदेषु निहितम् अस्ति इति तेषां विश्वासः आसीत् । अतः ते तान् प्रयत्नेन रक्षितवन्तः ।''

''वेदमन्त्राः कैः लिखिताः ? मुनयः खलु तेषां लेखकाः ?''

''वस्तुतः वेदमन्त्राः केनापि न लिखिताः एव ।''

''तर्हि ते कथं प्राप्ताः ? यदि ते लोके



स्युः तर्हि केनचित् वा लिखिताः स्युः एव खलु ?''

''वेदमन्त्राः अपौरुषेयाः इति उच्यन्ते । ते न केनाऽपि लिखिताः । विश्वामित्रादयः ऋषयः अपि मन्त्राणां लेखकाः न। ते 'मन्त्रद्रष्टारः' । दिव्यदृष्ट्या ते मन्त्रं दृष्टवन्तः । अतः तत्तनाम्ना ते ते मन्त्राः प्रसिद्धाः जाताः ।''

''किं मादृशाः बालकाः अपि मन्त्रान् द्रष्टुं शक्नुयुः ?''

''कुतो न ? नचिकेतसः नाम भवता श्रुतं स्यात् एव खलु ? सः अल्पे एव वयसि मृत्युदेवतः जीवनरहस्यं ज्ञातवान् इति श्रूयते ।''

''नचिकेताः इत्येतत् नाम श्रुतपूर्वम् इव भाति ।''

''आ सहस्राधिकवर्षेभ्यः तस्य नाम सर्वत्र श्रूयते एव । भवान् किं जानाति - तस्य नाम किमर्थं तथा सुप्रसिद्धम् इति ?''

''न श्रीमन् !''

''वेदोत्तरकाले उपनिषदः रचिताः । उपनिषत्सु कठोपनिषत् अपि अन्यतमा । तस्यां नचिकेतसः उपाख्यानं प्राप्यते । नचिकेतसः पिता वाजश्रवाः । सः कदाचित् कञ्चित् यज्ञं कृत्वा यागान्ते पूर्णाहुतेः अनन्तरं ब्राह्मणेभ्यः दक्षिणारूपेण विविधानि वस्तूनि यच्छन् आसीत् ।

बालकः नचिकेताः एतत्सर्वं कुतूहलेन पश्यन् पितरं पृष्टवान् - 'तात ! मां कस्मै दास्यति भवान् ?' इति ।

पित्रा किमपि न उक्तम् । बालः एतं प्रश्नं पुनः पुनः पृष्टवान् । तदा कुपितः वाजश्रवाः - 'यमाय दीयते भवान्' इति अवदत् ।

नचिकेताः यमलोकं गतवान् । यमः मृत्युदेवः । तथापि नचिकेताः न भीतः । यमः स्वभवने न आसीत् । नचिकेताः त्रीणि दिनानि निद्राहारादिकं विना यमस्य प्रतीक्षां कृतवान् ।

दिनत्रयानन्तरं प्रत्यक्षीभूतः यमः बालकस्य निष्ठां दृष्ट्वा सन्तुष्टः सन् त्रीन् वरान् दत्तवान् ।

''मम अनुपस्थित्या पिता दुःखितः स्यात् । तस्य दुःखम् उपशान्तं भवतु'' इति प्रथमं वरं प्रार्थितवान् नचिकेताः ।

''तथास्तु'' इति उक्तवान् यमः ।

''मया स्वर्गज्ञानं प्राप्यताम्'' इति द्वितीयं



वरं प्रार्थितवान् नचिकेताः ।

इदानीम् अपि ''तथास्तु'' इति नचिकेतसम् उक्तवान् यमः ।

''मरणानन्तरं मानवस्य आत्मा कुत्र गमिष्यति ? तत् मृत्युरहस्यम् अहं ज्ञातुम् इच्छामि'' इति उक्तवान् नचिकेताः ।

''वत्स ! एषः प्रश्नः भवतः वयसः अनुगुणः नास्ति । किं मृत्युरहस्यज्ञानेन ? दीर्घजीवनं, सुखं, समृद्धिः, शक्तिः इत्यादिषु अन्यतमः प्रार्थनीयः भवता'' इति उक्तवान् यमः ।

''हे करुणासागर ! भवता उक्तेषु कोऽपि वास्तविकं सुखं न ददाति । यत् मया प्रार्थितं तदेव ज्ञानम् आवश्यकं मह्यम् । तत् ज्ञानम् एकम् एव भवसागरं तारयितुम् अर्हति, न अन्यत्'' इति दृढस्वरेण यमम् उक्तवान् नचिकेताः ।

अन्ते नचिकेतसः अपेक्षां तिरस्कर्तुम् अनर्हः यमः नचिकेतसं मृत्युरहस्यं यथावत् बोधितवान् । एवं यमतः अपूर्वं ज्ञानं प्राप्य गृहं प्रत्यागतवान् नचिकेताः । अग्रे सः महर्षित्वेन प्रसिद्धः जातः ।

''किं यमस्य गृहस्य अन्वेषणं सुलभतया कृतं तेन ?'' इति विनोदमिश्रितस्वरेण पृष्टवान् सन्दीपः ।

''वत्स ! एतादृशीषु कथासु शब्दार्थस्य न प्राधान्यम् । पृष्टभूमिकायां स्थितं तात्पर्यम् अवगन्तव्यम् अस्माभिः । ऋषिः वाजश्रवाः कोपशीलः, पुत्राय शापस्य दाता च न । यदि तस्य योग्यता तावती एव स्यात् तर्हि सः उपनिषदि स्थानं प्राप्तवान् न स्यात् एव । अहं चिन्तयामि यत् सः -'मृत्युरहस्यं ज्ञातुं प्रयत्नं करोतु' इति पुत्रं बोधितवान् स्यात् । त्रीणि दिनानि एकान्ते उपविश्य ध्यानं कृत्वा नचिकेताः तत् ज्ञानं प्राप्तवान् स्यात् । अन्ते आत्मनः अमरत्वं तेन अवगतं स्यात्'' इत्येवं कथायाः तात्पर्यस्य विश्लेषणं कृत्वा उक्तवान् देवनाथवर्यः ।

''एवम् एव स्यात् तत्'' इति आश्चर्यं प्रकटयन् उक्तवान् सन्दीपः ।



# सिकतासु निमग्ना नगरी

*वर्णनम्* - **जयन्ती महालिङ्गम्** ◆ *चित्रम्* - **गौतमसेनः**




सोमनाथपुरतः १२ कि.मी. दूरे कपिला(कबिनी)नदी दक्षिणदिक्तः आगत्य कावेर्या मिलति । उभयोः सङ्गमस्थले अस्ति तिरमकूडलु नरसीपुरम्, यच्च ति.नरसीपुरनाम्ना निर्दिश्यते प्रायः । 'तिरुमकूड्लु' इत्यस्य पद अर्थः - 'तिसृणां सङ्गमः' इति । अत्र भूगर्भे स्फटिकसरोवरम् अस्ति इति प्रतीतिः अस्ति । तस्य जलेन कावेरीकपिलयोः सङ्गमः भवति अत्र ।

टि.नरसीपुरम् एकं महत्त्वपूर्णं तीर्थस्थानम् । महर्षेः अगस्त्यस्य मध्ययुगीयं किञ्चन मन्दिरम् अत्र अस्ति ।

इतः किञ्चित् अग्रे कावेर्याः वामतटे सिकताभिः आवृतं 'तलकाडु'नगरम् अस्ति । पूर्वं कदाचित् गङ्गवंशीयानां राजधानी आसीत् एतत् नगरम् । चोलवंशीयानां शासनकाले एतस्य नाम राजराजपुरम् इति जातम् । अग्रे एतत् होय्सळराजस्य विष्णुवर्धनस्य अपि राजधानी आसीत् । किन्तु अद्य तत्र सिकतानां राशयः दृश्यन्ते । एतेषाम् आकारः पौनःपुन्येन परिवर्तते । क्वचित् १५ मीटर् उन्नतः अपि भवति कश्चित् सिकताराशिः ।

एतद्विषये काचित् रोचिका कथा श्रूयते । कल्पनांशयुक्ता एषा ऐतिहासिकघटना तलकाडुप्रदेशस्य दुर्दशायाः कारणं विवृणोति । श्रीरङ्गपत्तने विजयनगरसम्राजाम् अन्तिमः तिरुमलरायः शासनं करोति स्म । तस्य मरणानन्तरं तस्य पत्न्याः आलमेलम्मायाः समीपे बहूनि अमूल्यानि आभरणानि स्थितानि । मैसूरुराजः राजवोडयरः एतानि आभरणानि स्वायत्तीकर्तुम् इष्टवान् । तदर्थं सः सैनिकान् प्रेषितवान् च । तेभ्यः आत्मानं रक्षन्ती धावितवती आलमेलम्मा । अन्ते सा नदीम् अतिक्रम्य अपरतीरे स्थितं 'मालङ्गि'नामकं स्थानं प्राप्तवती । यदा सैनिकाः



*साध्वी आलमेलम्मा शापं दत्तवती*

तत्रापि आगताः तदा सा आभरण-सहिता एव कावेर्यां पतितवती । पतनात् पूर्वं सा शापं दत्तवती - "तलकाडु सिकतामयं भवतु । मैसूरुराजाः च सन्तानहीनाः भवन्तु" इति ।

आलमेलम्मायाः शापः फलितः । तलकाडु सिकतामयः जातः । मालङ्गिप्रदेशे आवर्ताः उत्पन्नाः । मैसूरुराजवंशीयाः पौनःपुन्येन दत्तकपुत्रं स्वीकुर्वन्ति ।



तलकाडुस्थं वैद्येश्वरमन्दिरम्

एवं हि विश्वस्यते यत् तलकाडुप्रदेशे ३० मन्दिराणि सिकतासु निलिनाः सन्ति इति । इदानीं तु चत्वरि मन्दिराणि दृश्यन्ते । तानि च - गङ्गराजैः निर्मितं पातालेश्वरमन्दिरं, मरुलेश्वरमन्दिरं, होय्सलैः निर्मापितं कीर्तिनारायणमन्दिरं, चोलवंशीयैः निर्मापितं वैद्येश्वरमन्दिरं च । अद्यापि एतेषु मन्दिरेषु नित्यपूजा प्रचलति । प्रतिद्वादशवर्षं नवेम्बर्-डिसेम्बर्मासयोः अत्र प्रचलत् पञ्चलिङ्गदर्शनमेलां प्रति लक्षशः जनाः आगच्छन्ति । तत्काले अत्र तात्कालिकनगरी निर्मिता भवति ।

पातालेश्वर-मरुलेश्वरमन्दिरे अतिप्राचीने । पातालेश्वरस्य विषये एवं हि श्रूयते यत् लिङ्गरूपी अयं प्रातः रक्तवर्णः, मध्याह्ने कृष्णवर्णः, सायं श्वेतवर्णः च दृश्यते इति ।



गजैः क्रियमाणा पूजा व्याधाभ्यां दृष्टा

कीर्तिनारायणमन्दिरे त्रिमीटर्-उन्नता भगवतः विष्णोः मूर्तिः अस्ति । वैद्येश्वरमन्दिरे स्वास्थ्यप्रदातुः शिवस्य विग्रहः अस्ति । एतत् मन्दिरं १४ शतके निर्मितम् । एतस्य विषये कथा काचित् एवं श्रूयते - सोमदत्तनामकः ऋषिः शिष्यैः सह वसन् शिवस्य तोषणार्थम् अत्र तपः आचरितवान् । किन्तु तपसः समाप्तितः पूर्वम् एव गजाः आगत्य तान् मारितवन्तः । ते सर्वे गजरूपेण तस्मिन् एव वने जन्म प्राप्तवन्तः । तेषां तपसः साहाय्यार्थं भगवान् शिवः शाल्मलीवृक्षे लिङ्गरूपेण स्थितवान् । एतत् जानन्तः गजाः प्रतिदिनं प्रातः कावेर्यां स्नात्वा कमलपुष्पैः वृक्षमूलं पूजयन्ति स्म । तल-काडुनामकौ उभौ व्याधौ एतत्सर्वं दृष्ट्वा कुतूहलेन तं वृक्षं छेत्तुं प्रयत्नं कृतवन्तौ । यदा ताभ्यां वृक्षे प्रहारः कृतः तदा मूलतः रक्तं निर्गतम् । तत् दृष्ट्वा तौ व्याधौ दिग्भ्रान्तौ । तदा अशरीरवाणी श्रुता यत् कस्यचित् औषधीयसस्यस्य पर्णरसेन मूले जातः व्रणः लिप्यताम् इति । यदा तलः काडुः च तथा कृतवन्तौ तदा वृक्षमूलतः रक्तनिर्गमनं स्थगितम्, क्षीरनिर्गमनम् आरब्धम् । गजाः तौ व्याधौ च तत् क्षीरं पीतवन्तः । ततः ते अमरत्वं प्राप्तवन्तः । ततः शिवलिङ्गं परितः मन्दिरं निर्मितम् । स च प्रदेशः तलकाडुनाम्ना प्रसिद्धः जातः ।

वनविभागः सस्यारोपणद्वारा तलकाडुप्रदेशस्य सिकतामयतां निवारयितुं प्रयत्नं कुर्वन् अस्ति । किन्तु प्रतिवर्षं त्रिमीटर्-औन्नत्यं वर्धते सिकताराशेः । अस्य कारणं कावेरी एव । ग्रीष्मकाले कावेरीतीरे पङ्कानां शुष्कता भवति, सिकताश्च सङ्गृहीताः भवन्ति । यदा दक्षिणपश्चिमीयस्य ऋतुवातस्य (मन्सून्) आरम्भः भवति तदा स च सिकतामृत्तिकादिकम् आनीय तलकाडुप्रदेशे पातयति । इतः पूर्वं कावेरी बहुवारं प्रवाहमार्गं परिवर्तितवती यत् ततः अपि एवं सिकताराशिः निर्मितः स्यात् । आलमेलम्मायाः शापः, कावेर्याः गतिः वा कारणं वा न वा इति वयं न जानीमः, किन्तु एतत् तु सत्यं यत् तलकाडुप्रदेशः तु उध्वस्तः, विस्मृतप्रायः च अस्ति इति । अतः सामान्यदिनेषु तत्र कोऽपि जनः न दृश्यते ।

ततः अग्रे कावेरीनदी उत्तरदिशि प्रवहति । २५ कि.मि.दूरे 'शिवसमुद्र'प्रदेशः अस्ति । उत्तरतः आगता शिशांनामिका नदी अत्र कावेर्या मिलति । शिवसमुद्रप्रदेशे भगवतः रङ्गनाथस्य मन्दिरम्



*नरसीपुरस्थः नदीसङ्गमः*



*गगनचुक्किजलपातः*

अस्ति । अत्रत्यः रङ्गनाथः 'मध्यरङ्ग'नाम्ना अपि निर्दिश्यते । एषः द्वीपप्रदेशः ४.८ कि.मी.दीर्घः १.२ कि.मी.विस्तृतः च अस्ति । घनारण्येन आवृतः अस्ति अयं द्वीपप्रदेशः । तटतः द्वीपं प्राप्तुं लुशिङ्गटन्सेतोः उपयोगः करणीयः भवति । १५० वर्षेभ्यः पूर्वं शिलाभिः निर्मिता एषा ४७४ मीटर्दीर्घा अस्ति ।

कावेरी शिवसमुद्रप्रदेशम् उभयतः प्रवहति । उभे अपि धारे १०० मीटर्-उन्नतस्थलात् पततः । पश्चिमधारा ९० मीटर्-औन्नत्यात् पतति । एषा 'गगनचुक्कि'नाम्ना निर्दिश्यते । पूर्वीयधारा ६० मीटर्-औन्नत्यात् पतति । सा च 'भरचुक्कि'नाम्ना निर्दिश्यते । एतत् प्रपातद्वयम् अपि हरिद्वर्णपूर्णे रमणीयपरिसरे अस्ति । अतः आवर्षं पर्यटकान् प्रवासासक्तान् च आकर्षति अयं प्रदेशः ।

शिवसमुद्रप्रदेशे एव अस्माकं देशस्य सर्वप्रथमं वायुचालितविद्युदुत्पादनकेन्द्रम् अस्ति । १९०२ तमवर्षात् आरभ्य अत्र विद्युदुत्पादनं प्रचलति । कोलारनगरीयां सुवर्णखनीं प्रति विद्युतं नेतुम् एतस्य स्थापनं कृतम् । शिवसमुद्रतः कोलारं यावत् स्थितः विद्युत्तन्त्रीमार्गः तत्काले जगति एव अतिदीर्घत्वेन ख्यातः आसीत् । एतत् केन्द्रं शिलामये उन्नते प्रदेशे निर्मितम् । आंग्लभाषया एतादृशं स्थलं 'ब्लप्'-शब्देन निर्दिश्यते । १३५ मीटर-उन्नते स्थले स्थितः एषः प्रदेशः विद्युज्जनकं प्रति जलमार्गं स्थापयितुं समुचिततया अस्ति ।

शिवसमुद्रस्थम् एतत् विद्युत्केन्द्रं के. शेषाद्रि-अय्यर्वर्यस्य नाम्ना निर्दिश्यते । शेषाद्रिवर्यः १८९३ तः १९०१ तमवर्षपर्यन्तं मैसूरुराज्यस्य दिवानपदे आसीत् । सः एव एतां योजनाम् आरचय्य क्रियान्वितां कृतवान् । एतत् केन्द्रं प्रतिवर्षं ४२,००० किलोव्याट्मितां विद्युतम् उत्पादयति । दर्शकाः 'ट्राली'यन्त्रस्य साहाय्येन ४३५ मीटर् अधः गत्वा विद्युदागारस्य कार्यकलापान् द्रष्टुम् अर्हन्ति ।

गगनचुक्किप्रपातस्य भव्यतां द्रष्टुं समुचितं स्थलम् अस्ति पीरहईबनामकस्य मुसल्मानसाधोः स्मारकस्थलम् । सस्यश्यामले प्रदेशे स्थितम् एतत् स्मारकस्थानं हारे मुकुटमणिः इव शोभते । इतः शिंशाविद्युदागारम् अपि दृष्टिगोचरं भवति । कावेरीनद्याः धाराद्वयम् अपि 'सतेगाला'नामके स्थले सम्मिलितं भवति ।



# जामातृपुत्रभेदः

रामनगरवासी सीतारामः परोपकारित्वेन अतिथिसत्कारप्रियत्वेन च प्रसिद्धः आसीत् । तस्य गृहम् आगतः कोऽपि अतिथिः याचकः वा कदापि निराशया न प्रतिगच्छति स्म । एकदा सुकामः नाम सङ्गीतविद्वान् कविः तं द्रष्टुम् आगतः । सः धनं प्रसिद्धिं च प्राप्तुम् इच्छन् लक्ष्मणपुरं प्रति गच्छन् आशीर्वादप्राप्तीच्छया सीता-रामस्य गृहम् आगतवान् आसीत् ।

अतिथिसत्कारानन्तरं सीतारामः सुकामम् उक्तवान् - ''लक्ष्मणपुरे मत्परिचितौ उभौ स्तः । एकः मोहनः, अपरः विशालः । मोहनः मम मित्रस्य परमेशस्य जामाता । सः नगरे सुप्रतिष्ठितः धनिकः । स्वयं कविः अपि सः । कविः कश्चित् अपरस्य कवेः साहाय्यम् अवश्यं कुर्यात् एव । विशालः मम द्वितीयः पुत्रः । सः अपि नगरे प्रसिद्धः एव । परोपकारः तस्य प्रवृत्तिः । सः स्वयं सङ्गीतज्ञः गायकः च । सः अपि भवतः साहाय्यं कुर्यात् एव । अतः भवान् लक्ष्मणपुरे ताभ्यां मिलतु । भवतः अभीष्टं सिद्धं भविष्यति'' इति ।

एतत् श्रुत्वा नितरां सन्तुष्टः सुकामः अवदत् - ''भवतः आशीर्वादस्य कारणतः लक्ष्मणपुरप्राप्तितः पूर्वम् एव मम कार्यं सिद्धम् इव । इतः गत्वा भवतः नाम उल्लिख्य ताभ्यां सह सम्भाषणं करिष्यामि । भवतः आशीर्वादः मार्गदर्शनं च यदि न अभविष्यत् तर्हि प्रायः मया महत् कष्टम् अनुभोक्तव्यम् अभविष्यत्'' इति ।

तदा सीतारामः उक्तवान् - ''तयोः मेलनावसरे भवता मम नाम न उल्लेखनीयम् । यदि उल्लिख्येत तर्हि भवतः कार्यं खण्डितं भवेत् । तौ साहाय्यं न कुर्याताम् । तौ आत्मानम् असाधारणं भावयतः । 'कस्यचित्

कथनतः मम श्रेष्ठता प्रकाशिता न भवेत्' इति तयोः इच्छा । अतः मम नामोल्लेखः भवता न करणीयः एव । तौ तु परोपकार-शीलौ एव । अतः साक्षाद्दर्शनमात्रेण भवता साहाय्यं प्राप्यते एव'' इति ।

लक्ष्मणपुरं प्राप्तवान् सुकामः आदौ मोहनस्य गृहं प्राप्तवान् । 'अहं कश्चन कविः अस्मि' इति आत्मानं परिचाय्य सः उक्तवान् - ''महोदय ! भवतः कलाप्रियतां, कवि-प्रतिभाम्, उदारतां च श्रुत्वा अहं भवत्समीपम् आगतः । अहम् अपि काव्यक्षेत्रे परिश्रमवान् अस्मि । एतस्मिन् कलापोषके नगरे कलासेवा करणीया इति उद्देशेन अहम् अत्र आगतः अस्मि'' इति ।

मोहनः सुकामस्य मेलनात् नितरां सन्तुष्टः । तथापि सः तस्य प्रतिभां परीक्षितुम् इष्टवान् । अतः स्वस्य श्वशुरस्य परमेशस्य जीवनवृत्तान्तं श्रावयित्वा - ''भवान् एतत् वृत्तान्तं काव्यरूपेण उपस्थापयतु तावत्'' इति सूचितवान् ।

सुकामः तत् वृत्तान्तं मनसि निधाय काललयान्वितं ललितगम्भीरम् एकम् आशुपद्यं रचयित्वा श्रावितवान् ।

एतत् श्रुत्वा सन्तुष्टः मोहनः - ''भवान् वस्तुतः श्रेष्ठः कविः इत्यत्र नास्ति सन्देहः । मम मित्रं कलाशेखरः भवादृशस्य कवेः सान्निध्यम् इच्छति । अहं तस्मै एकं पत्रं दास्यामि । तत् स्वीकृत्य भवान् तं पश्यतु । तेन सः विना द्वितीयचिन्तनं भवन्तं स्वीकरिष्यति'' इति उक्तवान् ।

एतावत् उक्त्वा कलाशेखराय एकं पत्रं विलिख्य सुकामाय दत्तवान् मोहनः । मोहनस्य अनुज्ञां प्राप्य निर्गतः सुकामः विशालं दृष्ट्वा - 'अहं कश्चन सङ्गीतज्ञः अस्मि' इति वदन् स्वपरिचयम् उक्तवान् ।

विशालः सुकामस्य विनयेन व्यवहारेण च नितरां सन्तुष्टः । तथापि सोऽपि सुकामस्य सङ्गीतज्ञानस्य गभीरतां ज्ञातुम् इच्छन् उक्तवान् - ''मान्यवर ! मम पितरम् अधिकृत्य





मदग्रजेन एकं पद्यं रचितम् अस्ति । तत् समुचितेन रागेण यदि भवान् श्रावयेत् तर्हि अहम् अनुगृहीतः स्याम्'' इति ।

विशालेन दत्तं पद्यं सकृत् पठित्वा समुचितं रागं योजयित्वा सुमधुरेण कण्ठेन गीतवान् सुकामः । विशालः अपि - ''मत्मित्रस्य कलाशेखरस्य दर्शनात् भवदिष्टं सेत्स्यति'' इति उक्त्वा पत्रं दत्त्वा तं प्रेषितवान् ।

उभयविधम् अपि पत्रं स्वीकृत्य सुकामः कलाशेखरं द्रष्टुं गतवान् । कलाशेखरः स्वयं कविः कविपोषकः च । सङ्गीतज्ञः सङ्गीतश्रवणासक्तः च । नगरे धनिकगणे तस्य विशेषमान्यता आसीत् अपि । 'यः हृदयहारि पद्यं रचयेत् यश्च विविधैः रागैः मनः तर्पयेत् तादृशः कश्चन मद्गृहे अस्ति चेत् वरम्' इति चिन्तयति स्म सः ।

सः सुकामेन आनीतं पत्रद्वयं पठित्वा अवदत् - ''एषु दिनेषु कविम्मन्याः नीरस-श्लोकरचयितारः सङ्गीतज्ञंमन्याः श्रोतृ-पीडयितारः च आधिक्येन दृश्यन्ते । अतः वास्तविकाः प्रतिभाशालिनः कलाकाराः विरलाः एव जाताः । एतदर्थम् एव अहं मम मित्राणां पत्रम् अस्वीकृत्य आगतं कमपि न पुरस्करोमि । भवता आनीतयोः पत्रयोः दर्शनात् ज्ञायते यत् भवान् कविः सङ्गीतज्ञश्चापि इति । तथापि प्रत्यक्षं दृष्टम् अपि प्रमाणैः दृढीकरणीयं खलु ? अतः वदामि - आत्मना रचितम् एकं गीतं सरागं गायतु कृपया'' इति ।

एतदनुगुणं सुकामः स्वरचितम् एकं सुन्दरं पद्यं मनोहररागेण गीतवान् । एतस्मात् कलाशेखरः वशीकृतः अभवत् । सुकाम-विषये न केवलम् आदरः, अपि तु महती मैत्री अपि उत्पन्ना ।

एवं सुकामस्य जीवनम् अविचिन्तित-रूपेण सुखमयं जातम् । 'एतस्य सर्वस्य



कारणं हितचिन्तकाः एव' इति सः निर्णीतवान् । अतः 'हितचिन्तकानां विषये कृतज्ञतां प्रकटयितुं भोजोत्सवः कश्चन व्यवस्थापनीयः' इति सः चिन्तितवान् ।

आदौ सः मोहनस्य समीपं गत्वा उक्तवान् - ''मान्यवर ! भवतः साहाय्येन एव अहं जीवने सुस्थः सफलः च जातः । कृतज्ञता-प्रकाशनोद्देशेन अहम् एकं भोजोत्सवं निश्चितवान् अस्मि । तत्र भवता सकुटुम्बम् उपस्थातव्यम् इति मम इच्छा । कृपया एतद्विषये अङ्गीकारः सूचनीयः भवता'' इति ।

मोहनाय एषः प्रस्तावः सर्वथा न अरोचत । अतः सः अप्रसन्नतां प्रकटयन् उक्तवान् - ''भवता स्वयोग्यतायाः प्रतिभायाः च कारणतः एव मम साहाय्यं प्राप्तम् । अत्र मम औदार्यस्य पात्रम् अत्यल्पम् । एतादृशस्य निमित्तं भोजोत्सवस्य व्यवस्थापनं, सर्वेषां पुरतः कृतज्ञताप्रकाशनं च अहं सर्वथा न इच्छामि'' इति ।

तदा क्षमायाचनं कुर्वन् विनयेन उक्तवान् सुकामः - ''इह प्रपञ्चे कृतम् उपकारम् अपि विस्मर्तुम् अर्हः प्राणी मानवः एकः एव । अद्य अहं भवत्तः महान्तम् उपकारं प्राप्तवान् अस्मि । किन्तु अग्रे भवता कृतम् उपकारं विस्मृत्य भवति अनादरं दर्शयेयं, निन्दनं च कुर्याम् । तदा जनाः मां कृतघ्नं वदन्तः थूत्कुर्युः । तत् न भवेत् इति विचिन्त्य अहं सर्वेषां पुरतः भवता कृतम् उपकारम् अङ्गीकुर्वन् अस्मि । एवम् अङ्गीकारः अज्ञानजनितातः कृतघ्नतातः रक्षणे वज्रकवचायते । अतः भोजोत्सवस्य विषये अनुरोधं कुर्वन् अस्मि । तद्दिने भवतः उपस्थितिः मम उपकाराय एव'' इति ।

मोहनः सुकामस्य बुद्धिमत्तां दूरदर्शितां च दृष्ट्वा सन्तुष्टः सन् उक्तवान् - ''अस्तु, तस्मिन् दिने उपस्थितः भविष्यामि । तस्य कार्यक्रमस्य निमित्तं मम श्वशुरः परमेशः, श्यालः गणपतिः च निमन्त्रितौ चेत् वरं स्यात्'' इति ।

''पुनः अपि व्यक्तिद्वयस्य नाम सूचयतु कृपया'' इति सुकामेन सानुरोधं निवेदितः मोहनः - ''मम अग्रजं विशालं, पितरं सीतारामं चापि निमन्त्रयितुम् अर्हति भवान्'' इति सूचितवान् ।

'मोहनः सीतारामवर्यस्य एव पुत्रः, विशालः एतस्य सहोदरः एव' इति ज्ञात्वा

सुकामः आश्चर्यचकितः अभवत् । यतः सीतारामः विशालम् एव पुत्रत्वेन निर्दिष्टवान् आसीत्, न तु मोहनम् ।

अनन्तरं सुकामः विशालस्य गृहं गत्वा तमपि भोजोत्सवनिमित्तं निमन्त्रितवान् । 'सकुटुम्बं सपरिवारं च उपस्थातव्यम्' इति तम अपि सानुरोधं निवेदितवान् सः । तदा विशालः आदौ पितुः सहोदरस्य च नाम सूचितवान् । पुनरपि यदा प्रार्थितं तदा श्वशुरस्य परमेशस्य, श्यालस्य गणपतेः च नाम तेन सूचितम् ।



एतस्य श्रवणात् सुकामः पुनरपि आश्चर्यचकितः । 'मोहन-विशालौ न केवलं सीतारामस्यैव पुत्रौ, अपि तु तौ परमेशस्य जामातरौ अपि ! सीतारामवर्यः एतद्विषये किमपि न उक्तवान् एव ! एवं किमर्थं वा स्यात् ? प्रत्यक्षदर्शनात् एव एषः अंशः स्पष्टीकृतः भवेत् । सीतारामवर्यः भोजोत्सवार्थं निमन्त्रणीयः अस्ति एव' इति चिन्ततवान् सुकामः रामपुरं प्रति प्रस्थितवान् ।

सीतारामं दृष्ट्वा साष्टाङ्गं नमस्कृत्य विनयेन उक्तवान् सुकामः – ''महानुभाव ! भवद्विषये मया यत् श्रुतम् आसीत् ततोऽपि नितरां विलक्षणः श्रेष्ठः च अस्ति भवान् । अतः समर्प्यते एषोऽयं प्रणामाञ्जलिः । भवतः परोपकारबुद्धिं निस्स्वार्थभावनां च दृष्ट्वा यथा आकृष्टः अस्मि, तथैव भवतः रहस्यमयबुद्धिं गभीरज्ञानं च दृष्ट्वा आश्चर्यचकितः अपि अस्मि । भवतः सूचनायाः अनुगुणम् अहं भवन्मित्रस्य परमेशस्य जामातरं मोहनं, भवतः द्वितीयपुत्रं विशालं च दृष्टवान् । तयोः साहाय्यस्य कारणतः, भवतः आशीर्वादस्य कारणतः च अहं जीवने सुस्थितिं प्राप्तवान् अस्मि । साहित्यसङ्गीतयोः सेवां कर्तुम् उत्तमम् अवकाशं प्राप्तवान् अस्मि अपि । भवतां सर्वेषां सहकारेण एव अहम् एतां स्थितिं प्राप्तवान् इत्यत्र नास्ति सन्देहः । उपकृतवतां विषये कृतज्ञताप्रकाशनं मम धर्मः । अतः एकं भोजोत्सवं निश्चितवान् अस्मि । तदर्थं निमन्त्रयितुम् अत्र उपस्थितः अस्मि । एतदवसरे एतत् अपि ज्ञातुम् इच्छामि यत् मोहनविशालौ भवतः पुत्रौ एव चेदपि, परमेशस्यैव जामातरौ चेदपि एकं स्वपुत्रत्वेन, अपरं च परमेशजामातृत्वेन च भवान् किमर्थं निर्दिष्टवान् इति । अल्पमतिः अहम् एतस्य रहस्यं ज्ञातुं न शक्तवान्'' इति ।

तदा सीतारामः मन्दहासपूर्वकम् उक्तवान् – ''यद्यपि मोहनः विशालः च समर्थौ, सम्पन्नौ, सम्मान्यौ, परोपकारशीलौ च स्तः, आतिथ्यादिषु वंशपरम्परायाः एव अनुसर्तारौ स्तः, तथापि मोहनस्य स्वाभाविकः पक्षपातः श्वशुरस्य विषये, विशालस्य तु मद्विषये । मोहनः श्वशुरपरिवारस्य प्राधान्यं चिन्तयति, विशालश्च मत्परिवारस्य । यथा बुद्धस्य अनुयायिनः बौद्धाः, शिवस्य अनुयायिनः शैवाः, भगवति भक्तिमान् भक्तः, गुरोः आज्ञाकारी शिष्यः, तथैव श्वशुरस्य महत्त्वं यः चिन्तयति सः जामाता इति, पितुः महत्त्वं यः चिन्तयति सः पुत्रः इति च उच्येते । व्यक्तीनाम् आचरणं, व्यवहारं, चिन्तनं च अवलम्ब्य एतादृशानां शब्दानां प्रयोगः भवति । एषः अंशः भवतः विषये अपि अन्वितः भवति । यदि भवान् कलाशेखरस्य इच्छानिच्छादिमात्रम् अनुसरन्, तस्य आश्रयमात्रम् एव अवलम्बमानः तिष्ठेत् तर्हि भवान् तस्य सेवकमात्रं भवेत् । भवता तु महाकविना सङ्गीतकुलतिलकेन च भवितव्यम् । अतः विस्तृतः कविप्रपञ्चः सङ्गीतसागरः च भवता कदापि न विस्मर्तव्यः'' इति ।

सीतारामस्य उपदेशः विचारचातुरी च सुकामस्य हृदयं प्राविशत् । जीवनस्य लक्ष्यं स्फुटं जातम् । मार्गश्च स्पष्टः जातः । 'मोहनः आदौ श्वशुरश्यालयोः नाम्नः उल्लेखं कृत्वा अनन्तरकाले पिताभ्रात्रोः नामल्लेखं कृतवान् । अतः तस्य जीवने जामातृत्वं प्रधानं जातं, पुत्रत्वं च गौणम् । किन्तु विशालः तावत् आदौ पिताभ्रात्रोः नाम्नः उल्लेखं कृतवान् । अनन्तरम् एव श्वशुरश्यालयोः नाम उल्लिखितवान् । अतः तस्य जीवने पुत्रत्वं प्राथम्यम् आवहति, जामातृत्वं च द्वितीयस्थाने तिष्ठति' इति चिन्तितवान् सुकामः ।

एवं जामातृपुत्रभेदं ज्ञातवान् सुकामः सर्वदा ज्ञानपूर्णम् एव वचनं वदन्तं सीतारामम् आदरेण भोजोत्सवार्थं निमन्त्र्य तदीयाम् अनुज्ञां प्राप्य ततः निर्गतवान् ।



श्रीकृष्णदौत्यम् - २

# महाभारतम्

हस्तिनापुरे श्रीकृष्णस्य आगमनवार्ता सर्वत्र प्रसृता । धृतराष्ट्रः एतां वार्तां श्रुत्वा भीष्मं, द्रोणं, विदुरं, सञ्जयं, दुर्योधनं च आनाय्य उक्तवान् - ''अद्य हस्तिनापुरं प्रति श्रीकृष्णः आगच्छन् अस्ति । तस्य स्वागतार्थं तोरणमालादिभिः नगरस्य द्वाराणि मार्गाः च सम्यक् अलङ्करणीयाः । व्यवस्थायां कोऽपि लोपः न भवेत्'' इति ।

धृतराष्ट्रस्य आदेशानुसारं दुर्योधनः हस्तिनापुरस्य सर्वेषाम् अपि मार्गाणाम् अलङ्कारं कारितवान् । तावदेव न, वृकस्थलपर्यन्तम् अपि मार्गाः अलङ्कृताः । सर्वत्र तोरणानि निर्मितानि । पताकाश्च स्थापिताः ।

श्रीकृष्णः एतादृशम् अलङ्करणं कटाक्षेण अपि अपश्यन् हस्तिनापुरं प्रविष्टवान् । तं स्वागतीकर्तुं भीष्मद्रोणादिभिः सह धृतराष्ट्रपुत्राः आगतवन्तः । दुर्योधनः तत्र उपस्थितः न आसीत् ।

श्रीकृष्णः धृतराष्ट्रभवनस्य पुरतः स्वरथं स्थगयित्वा रथात् अवतीर्णः, साक्षात् राजसभां प्रविष्टः च । कृष्णस्य आगमनं दृष्ट्वा धृतराष्ट्रः, अन्ये राजानश्च आदरेण उत्थितवन्तः । कृष्णः आदौ धृतराष्ट्रस्य भीष्मस्य च योगक्षेमं विचारितवान् । ततः वयोनुगुणं सर्वेषां राज्ञां कुशलं पृष्टवान् ।

धृतराष्ट्रः श्रीकृष्णं स्वर्णसिहांसने उपवेशितवान् । श्रीकृष्णः तस्य आतिथ्यं स्वीकृत्य किञ्चित्कालं वार्तालापं कृत्वा विदुरस्य गृहम् उद्दिश्य गतवान् ।





तस्मिन् एव दिने अपराह्णे कुन्ती कृष्णसमीपम् आगता । सा कृष्णं प्रीत्या आलिङ्ग्य पुत्राणां कुशलं पृष्ट्वा उक्तवती - "कृष्ण ! मम पुत्राः माम् एकाकिनीम् अत्र परित्यज्य गताः । पितृविहीनाः पुत्राः मया कष्टेन पोषिताः । न जाने, ते अरण्ये कियत् कष्टम् अनुभूतवन्तः इति । धर्मराजादयः कुशलिनः खलु ? कोमलाङ्गी द्रौपदी अपि किं कुशलिनी ? ते कदा वा मया दृश्येरन् ? भवति स्थिते अपि धर्मपराणां तेषां का एषा दुर्दशा ?" इति ।

श्रीकृष्णः तां सान्त्वयन् उक्तवान् - "अलं धैर्यच्युत्या । अचिरात् एव भवत्याः पुत्राः राज्याधिकारं प्राप्स्यन्ति । कतिचन दिनानि धैर्येण सोढव्यानि" इति ।

कुन्त्याः अनुज्ञां प्राप्य कृष्णः दुर्योधनं द्रष्टुं गतवान् । दुर्योधनस्य भवनम् अलका इव वैभवोपेतम् आसीत् । रत्नखचिते उन्नतसिंहासने गर्वेण उपविष्टः आसीत् दुर्योधनः । दुःश्शासन-शकुनि-कर्णादयः तस्य पार्श्वे उपविष्टाः आसन् । उपस्थितं श्रीकृष्णं दृष्ट्वा सर्वे उत्थिताः । दुर्योधनः श्रीकृष्णं विशिष्टे आसने उपवेशितवान् । कृष्णः सर्वेषां कुशलं विचारितवान् । दुर्योधनः सानुरोधं प्रार्थितवान् यत् अद्य रात्रौ अत्रैव भोजनं कृत्वा विश्रान्तिः स्वीकरणीया इति । किन्तु कृष्णः अत्र असम्मतिं दर्शितवान् ।

तदा दुर्योधनः उक्तवान् - "भवान् निष्पक्षपातदृष्ट्या व्यवहरन् कौरवपाण्डव-पक्षयोः साहाय्यं कुर्वन् अस्ति । अतः कृतज्ञताभावेन प्रेरितः अहं निवेदयन् अस्मि यत् अद्य अत्रैव स्थित्वा अस्माकम् आतिथ्यं स्वीकरणीयम् इति । तथापि किमर्थं भवान् अस्माकं प्रार्थनां निराकरोति ?" इति ।

"अहं दूतः सन् अत्र उपस्थितः अस्मि । यावत् मम मनोरथः पूर्णः न भवति तावत् भवतः आतिथ्यस्य स्वीकारः औचित्यं न आवहति । अतः मया निराकृतिः दर्शिता" इति उत्तरं दत्तवान् श्रीकृष्णः ।

"आगमनोद्देशस्य पूर्त्यर्थं भवान् यथाशक्ति प्रयत्नं करोतु नाम । स च अन्यः विषयः । भवान् हस्तिनापुरम् आगतः अस्ति । अत्र उपस्थितेन भवता अस्माकम् आतिथ्यं स्वीकरणीयम् एव" इति सानुरोधं पुनः उक्तवान् दुर्योधनः ।



तदा श्रीकृष्णः हसन् उक्तवान् – ''ये प्रेम्णा व्यवहरन्ति, ये वा विपत्तौ सन्ति तैः सह भोजनं क्रियते चेत् विशेषानन्दः स्यात् । अस्मद्विषये भवतः प्रीतिः अल्पा अपि नास्ति । पाण्डवानां विषये अकारणद्वेषः भवतः । तान् शत्रून् भावयति भवान् । ते तु धर्ममार्गनिरताः । तेषां धर्माचरणविषये न कोऽपि दोषं दर्शितवान् अद्यावधि । अतः ते मम प्रियाः । तेषां विषये न्याय्यः व्यवहारः नास्ति भवतः । तेषु शत्रुता दर्शिता चेत् मयि अपि शत्रुता दर्शिता इव । एतादृशे अवसरे भोजनार्थं निमन्त्रणम् एव सर्वथा अनुचितम्'' इति ।

एतावत् उक्त्वा श्रीकृष्णः ततः उत्थाय विदुरस्य गृहं प्रति प्रस्थितवान् ।

भोजनानन्तरं विदुरः श्रीकृष्णम् उक्तवान् – ''कृष्ण ! भवान् अत्र उपस्थितः यत् तत् उचितं न जातम् इति भाति मम । दुर्योधनः कर्तव्यं मौल्यानि च विस्मृत्य युद्धैकासक्तः जातः अस्ति । कर्णः साटोपं वदति यत् अहम् एकः एव पाण्डवान् पराजेष्यामि इति । स तु शान्तेः विरोधी एव । कर्णे विश्वस्य दुर्योधनः शान्तिपक्षे अनासक्तिं दर्शयति । अन्यच्च तस्य सैन्यबलम् अपि सुमहत् । तस्य पक्षस्य बहवः राजानः भवतः पूर्वशत्रवः एव । अतः ते अपि भवतः प्रस्तावस्य तिरस्करणे एव विशेषरुचिं दर्शयन्ति । भवतः शक्तौ अस्ति मम पूर्णः विश्वासः । तथापि तेषां समक्षं भवतः अगमनम् एव वरम् इति मम तु भाति'' इति ।

तदा कृष्णः उक्तवान् – ''विदुर ! मित्रोचितं वचनम् उक्तं भवता । भवता यथा तर्कितं तथैव सम्भविष्यति अपि । तथापि मौनेन मम स्थितिः सर्वथा अशोभावहा । उभयोः पक्षयोः सर्वनाशः यथा न भवेत् तथा कर्तुं मया सर्वविधाः अपि प्रयासाः करणीयाः एव । यदि एवं मया न क्रियेत तर्हि जनाः मयि दोषम् आरोपयेयुः यत् उभयपक्षीयाः अपि विनाशाग्नौ पातिताः इति । कौरवसभां प्रति गमनात् अपायः सम्भवेत् इति तु भवतः आतङ्कः । तद्विषये अलं चिन्तया । आत्मरक्षणे अहं नितरां समर्थः अस्मि'' इति ।

तस्यां रात्रौ श्रीकृष्णः विदुरस्य गृहे एव शयनं कृतवान् । अनन्तरदिने प्रातः

राजसभां गन्तुं सः यावत् रथसमीपं गतवान् तावता धृतराष्ट्रेन प्रेषितौ शकुनिदुर्योधनौ तत्र उपस्थितौ । तौ अनुसृत्य बहवः राजानः गजम् अश्वं वा आरुह्य तत्र उपस्थिताः आसन् । तैः समेतः श्रीकृष्णः ततः प्रस्थितवान् । तेषां मध्ये रथे विराजमानः राजमार्गे गच्छन् श्रीकृष्णः आकाशे ताराणां मध्ये स्थितः चन्द्रः इव विशेषतः अशोभत । तं द्रष्टुं मार्गम् उभयतः आबालवृद्धं सर्वे उपस्थिताः आसन् ।



धृतराष्ट्रस्य राजसभायाः मुख्यद्वारस्य समीपे श्रीकृष्णस्य सूचनायाः अनुगुणं सारथिः दारुकः रथं स्थगितवान् । सात्यकि-विदुराभ्यां सह कृष्णः राजसभां प्रविष्टवान् । सर्वे सभासदः उत्थाय कृष्णस्य स्वागतं कृतवन्तः । उचिते आसने कृष्णः उपवेशितः । तस्य पार्श्वद्वये विदुरः सात्यकिः च उपविष्टवन्तौ ।

सभायां क्षणकालं मौनं प्रसृतम् । श्रीकृष्णे सर्वेषां दृष्टिः सलंग्ना आसीत् । श्रीकृष्णः सर्वान् राज्ञः सकृत् दृष्टवान् । अनन्तरं सः धृतराष्ट्रम् उद्दिश्य उक्तवान् - ''यद्यपि कौरवपक्षे पाण्डवपक्षे च युद्ध-सन्नाहः प्रचलन् अस्ति, तथापि पाण्डव-प्रतिनिधित्वेन अहं शान्तिप्रस्तावम् उप-स्थापयितुम् उपस्थितः अस्मि । पाण्डवाः यद्यपि अद्य शान्तिपक्षस्य समर्थकाः न सन्ति, तथापि युद्धस्य दुष्परिणामान् निवेद्य तान् शान्तिस्वीकारे सहमतान् कर्तुं शक्नुयाम् ।''

''सर्वेषु राजवंशेषु कुरुवंशः श्रेष्ठः । तस्मिन् भवान् एव शीर्षायते । यदि युद्धं सम्भवेत् तर्हि कुरुवंशस्य, सर्वेषां राजवंशानां च विनाशः सम्भविष्यति । तदा भवतः नाम कलङ्कितं भविष्यति । भवतः पुत्राः तु सर्वान् धर्मनियमान् भञ्जितवन्तः । पाण्डवानां विषये तैः अमानवीयः व्यवहारः अनुष्ठितः । यदि युद्धरूपम् अनिष्टम् अग्रे आपतेत् तर्हि तत्र कारणभूताः भवन्ति कौरवाः एव । तान् सन्मार्गम् उपदेष्टुम् अस्ति भवतः अर्हता । तान् निरोद्धुम् अस्ति भवतः अधिकारः । तान् निग्रहीतुम् अस्ति भवतः सामर्थ्यम् । न्याय्ये मार्गे तेषां स्थापनं भवतः धर्मः । भवान् तेषां पिता सम्राट् च अस्ति । तेषां हितस्य चिन्तनं भवतः कर्तव्यम् ।''



''युद्धे पाण्डवान् कोऽपि जेतुं न शक्नोति। ते अजेयाः । यदि शान्तिः सर्वथा असाध्या तर्हि सन्धिः वा वरं स्यात् । यावत् पाण्डवाः भवद्भिः सह भवन्ति तावत् भवतां शासनं निष्कण्टकं भविष्यति। यदि युद्धं भवेत् तर्हि भवतां न कोऽपि लाभः । युद्धे सर्वे राजानः कस्यचित् पक्षस्य समर्थनं कृत्वा भागं गृह्णीयुः एव । अन्ते युद्ध-ज्वालायां शलभाः इव मृताः भवन्ति ते। एतादृशः घोरः विनाशः भवता निवारयितुं शक्यः। भवान् स्वपुत्रान् सन्मार्गे आनयतु। अहं पाण्डवानां कोपं शमयिष्यामि । उभयविधप्रयत्नतः युद्धं यदि निवारितं भवेत् तर्हि शान्तिः भवेत् लोके । अन्यच्च पाण्डवाः पितृविहीनाः । भवान् एव तेषां पिता इव । सङ्कटकाले ते कं वा शरणं गच्छेयुः ? ते अपि भवद्वंशसम्बन्धिनः एव। भवद्विषये भवत्पुत्रविषये वा तैः को वा प्रमादः कृतः ? धर्मराजः सरलहृदयः इति भवान् अपि जानाति एव । लाक्षागृहे दाहः कृतः चेदपि सः भवत्समीपम् आगतः। इन्द्रप्रस्थं प्रति भवता प्रेषितः सः विना प्रतिवचनं गतवान्। शकुनिः तं वञ्चितवान् । तथापि सः भवतः वचनं पालयन् वनवासं कृतवान्। एवं स्थिते अपि तस्य विषये अन्याय्याचरणं किं शोभते ?''

''अन्ते अहं कौरवपाण्डवानां हितं मनसि निधाय एतां सभाम् अभियाचामि यत् पाण्डवाः परम्पराप्राप्तं राज्यं धर्म-मार्गेण यथा प्राप्नुयुः तथा कर्तुं सहकुर्वन्तः भवन्तः कुरुवंशस्य अन्यराजवंशानां च सर्वनाशं निवारयन्तु इति । अत्र उपस्थिताः सर्वे राजानः परस्परद्वेषासूयादिकं कोप-शत्रुतादिकं च परित्यज्य प्रजानां हितं मनसि निधाय राज्यपालने मतिं कुर्युः इति मम अपेक्षा। द्वेषः विवेकबोधनेन उपशमनीयः, न तु कोपवचनैः अभिवर्धनीयः। अस्माकं सर्वेषाम् उपस्थितौ अन्याय्यव्यवहारः यदि सम्भवेत् तर्हि तज्जनितं पापम् अस्मान् सर्वान् दहेत् एव। अहं पूर्वापरं समग्रं मनसि निधाय सम्राजं तत्सभां च एतत्सर्वं वदन् अस्मि। सम्यक् विचिन्त्य यथायोग्यं निर्णयं कर्तुम् अर्हन्ति भवन्तः ।''

एतावत् उक्त्वा कृष्णः मौनम् आश्रितवान् । समग्रा सभा अपि किञ्चित्कालं मौनेन स्थितवती ।

किञ्चित्कालानन्तरं परशुरामः उत्थाय धृतराष्ट्रम् उद्दिश्य - ''महाराज ! एतस्मिन् अवसरे अहं प्राचीनकालस्य घटनां स्मारयन् किञ्चित् वक्तुम् इच्छामि । पूर्वं दम्भोद्भवः नाम राजा आसीत् । स्वपराक्रमविषये तस्य महान् गर्वः । सः प्रतिदिनं दर्पं प्रदर्शयन् राजसभायां पृच्छति स्म - 'मत्तः अपि श्रेष्ठः योद्धा एतस्मिन् प्रपञ्चे कः अस्ति ?' इति ।

ऋषिमुनयः तं बोधितवन्तः यत् अत्यात्मविश्वासः घातकः भवेत् इति । तथापि राजा विवेकं न प्राप्तवान् । अन्ते ऋषयः तम् उक्तवन्तः - 'गन्धमादनपर्वते स्थितौ उभौ मुनिवरौ महायोद्धत्वेन ख्यातौ'' इति ।

दम्भोद्भवः सेनया सह गन्धमादनपर्वतं गतवान् । तौ मुनिवरौ तं स्वागतीकृत्य उक्तवन्तौ - 'अत्र विश्रान्तिं स्वीकृत्य अस्माकं आतिथ्यं ग्रहीतव्यम्' इति । तदा दम्भोद्भवः गर्वेण एव उक्तवान् 'युद्धम् एव अस्माकम् आतिथ्यम्' इति । तत् श्रुत्वा तौ तपस्विनौ उक्तवन्तौ - 'एषा तपोभूमिः । युद्धम् अत्र न करणीयम्' इति । 'भवन्तौ भीरुपुरुषौ । अतः एव युद्धं निवारयितुम् एवं वदतः' इति उक्तवान् दम्भोद्भवः ।

एतत् श्रुत्वा किञ्चिदिव क्रुद्धः एकः तपस्वी एकं कुशम् उत्पाट्य अभिमन्त्र्य दम्भोद्भवस्य सेनायाः उपरि क्षिप्तवान् । एतस्य परिणामतः सेना निद्रामग्ना जाता । एतत् दृष्टवतः दम्भोद्भवस्य गर्वः अपगतः । सः तपस्विनौ साष्टाङ्गं नमस्कृत्य क्षमां याचितवान् । 'व्यर्थप्रलापं परित्यज्य प्रजाहितकार्येषु भवान् निरतः भवतु । तेनैव कीर्तिः प्राप्यते' इति उक्त्वा सः तपस्वी नेत्रे निमील्य ध्याने मग्नः जातः ।

तौ तपस्विनौ एव नर-नारायणौ । यः कुशं क्षिप्त्वा सेनां परास्तां कृतवान् सः नरः । अपरश्च नारायणः । तौ एव एतस्मिन् जन्मनि अर्जुनः कृष्णः च भूत्वा जन्म प्राप्तवन्तौ स्तः । अर्जुनः यावत् गाण्डीवं न उन्नयेत् ततः पूर्वम् एव भवान् दम्भं परित्यज्य विवेकेन व्यवहरतु । एतेनैव भवतः भवद्वंशस्य च हितम्'' इति एतावत् उक्त्वा परशुरामः मौनम् आश्रितवान् ।



# वास्तविकं सौन्दर्यं कुत्र ?

राज्ञ्याः काचित् सेविका आसीत् । तस्यां राज्ञ्याः विशेषप्रीतिः । राज्ञ्याः प्रकोष्ठस्य स्वच्छीकरणसमये कदाचित् तया सेविकया हारात् च्युतानि मौक्तिकानि प्राप्यन्ते स्म । सा सेविका तानि प्रामाणिकतया राज्ञ्यै प्रत्यर्पयति स्म । एतस्मात् सन्तुष्टा राज्ञी तदा तदा आभरणानि मौक्तिकादीनि च तस्यै उपायनरूपेण ददाति स्म ।

तस्याः सेविकायाः एकः पुत्रः आसीत् । सः पार्श्वग्रामे मातुलगृहे वसन् विद्याभ्यासं करोति स्म । तस्य मातुलः एव अध्यापकः आसीत् । सः भागिनेयं श्रद्धया पाठयति स्म ।

एकदा सः बालकः गृहम् आगतवान् । रात्रौ सः मात्रा सङ्गृहीतानि मौक्तिकानि आभरणानि च आकस्मिकतया दृष्टवान् । तानि दृष्ट्वा सन्तोषेण स्पृशन् सः उक्तवान् - ''अहो, अतीव सुन्दराणि एतानि !'' इति ।

''सत्यम्; एतानि सुन्दराणि एव । किन्तु इतोऽपि श्रेष्ठानि आभरणानि धृतवतीं राज्ञीं यदि भवान् पश्येत् तर्हि वास्तविकसौन्दर्यस्य ज्ञानं प्राप्नुयात् । मया दृष्टेषु सुन्दरवस्तुषु सा एव अद्वितीया'' इति उक्तवती सा सेविका ।

एतत् श्रुत्वा बालकः प्रशान्ततया स्थितवान् । तस्य मनसि विशेषचिन्तनं प्रवृत्तम् । अनन्तरदिने प्रातः सः गृहे न दृष्टः एव । चिन्ताक्रान्ता माता तं सर्वत्र अन्विष्टवती । प्रतिवेशिनः अपि अत्र साहाय्यं कृतवन्तः । तथापि सः बालकः केनापि कुत्रापि न दृष्टः ।

केषाञ्चन वर्षाणाम् अनन्तरं पुत्रेण प्रेषितम् एकं पत्रं तया मात्रा प्राप्तम् । पत्रे लिखितम् आसीत् - ''अम्ब ! मातुलस्य मुखात् मया श्रुतम् आसीत् यत् सूर्य-चन्द्र-नक्षत्र-गगनादयः भगवतः अलङ्काराः इति । आभरणेभ्योऽपि धारयित्री व्यक्तिः एव सुन्दरी इति भवती यत् उक्तवती ततः अहं प्रेरितः अभवम् । आभरणेभ्योऽपि धारयित्री राज्ञी यथा सुन्दरतमा तथैव सूर्यचन्द्राद्याभरणेभ्योऽपि भगवान् एव सुन्दरतमः इति मया निर्णीतम् । अतः भगवतः अन्वेषणार्थं मया निर्गतम् । इदानीं भगवद्दर्शनं प्राप्य अहं प्रतिदिनं तस्य पादपद्मयोः पूजां कुर्वन् अस्मि । भगवतः भव्यता, अलौकिकं सौन्दर्यं च वर्णनातीतम्'' इति ।

एतत् पठित्वा माता क्षणकालं खिन्ना । किन्तु अनन्तरकाले 'एतादृशं सौभाग्यं प्राप्तवत्सु विरलेषु मम पुत्रोऽपि अन्यतमः' इति स्मृत्वा सा नितरां प्रसन्ना जाता ।





# पितुः निमित्तम् ...

गान्धारदेशस्य राजा धन्वीश्वरः परिजनैः सह मृगयार्थम् अरण्यं गतवान् । आदिनं परिश्रमः कृतः चेदपि तेन एकोऽपि पशुः न प्राप्तः मारणार्थम् । एवम् अटन् सः परिजनैः वियुक्तः अभवत् । बहुधा अटित्वा श्रान्तः सः एकस्य वृक्षस्य अधः उपविष्टवान् । तस्मात् वृक्षतः मादकः गन्धः निर्गच्छति स्म । अत्रान्तरे तेन एका अलौकिकसुन्दरी दृष्टा । 'निर्जने अरण्ये एषा अप्सरस्सदृशी कथं दृष्टिगोचरतां गता ?' इति सः आश्चर्यम् अनुभूतवान् ।

तस्याः अनुपमसौन्दर्यात् आकृष्टः राजा तस्याः समीपं गत्वा उक्तवान् – ''हे सुन्दरि ! का भवती ? निर्जने अरण्ये भवती कथम् उपस्थिता ? अहम् एतस्य देशस्य राजा अस्मि । भवतीं परिणेतुम् इच्छामि च । अहं भवत्यै सर्वस्वम् अर्पयिष्यामि । स्वर्गसुखं भवत्यै कल्पयिष्यामि च । अतः भवती महाराज्ञी सती मम प्रासादे वसतु । मां सन्तोषसागरे मज्जयतु च'' इति ।

तस्यै गन्धर्वकन्यायै एषा प्रणयभिक्षा न अरोचत । मधुरवचनैः सा स्वस्य निराकृतिं प्रदर्शितवती । किन्तु राजा मोहवशात् पुनः पुनः तां परिणयम् अभियाचितवान् ।

एतस्मात् क्रुद्धा सा शापं दत्तवती – ''यस्याः दृष्टेः कारणतः भवान् एतत्सर्वं कुर्वन् अस्ति सा भवतः दृष्टिः एव विलुप्ता भवतु'' इति । ततः सा आकाशमार्गं गत्वा अदृश्या अभवत् ।

तस्याः निर्गमनसमनन्तरम् एव राज्ञः दृष्टिशक्तिः विलुप्ता । सः बालः इव रुदन् महान्तं पश्चात्तापम् अनुभूतवान् । अत्रान्तरे तम् अन्विष्यन्तः परिजनाः तत्र आगताः । राज्ञः दुरवस्थां दृष्ट्वा ते नितरां खिन्नाः । राजा प्रवृत्तं सर्वं निवेदितवान् ।

ततः सः प्रासादं प्रति नीतः । राजवैद्यः आनायितः । सर्वं परीक्ष्य वैद्यः उक्तवान् – ''शापात् गता दृष्टिशक्तिः चिकित्सातः प्रतिप्राप्तुं न शक्या । शापं दत्तवती एव शापात् मुक्तिम् अपि दातुम् अर्हति'' इति ।



राज्ञः धन्वीश्वरस्य पुत्रः निरञ्जनः साहसी, धीरः, पितृभक्तः च । सः पितुः कष्टं न असहत । सः निश्चितवान् – 'अहं गन्धर्व-लोकं गत्वा तस्याः गन्धर्वकन्यायाः अनुग्रहं प्राप्य पितुः शापविमुक्तिं साधयिष्यामि एव' इति ।

सः श्रुतवान् आसीत् यत् पूर्वदिशि अस्ति गन्धर्वलोकः इति । अतः सः पूर्वदिशम् अनुसृतवान् । बहूनि दिनानि प्रयाणं कृत्वा सः एकम् अरण्यं प्राप्तवान् । दीर्घप्रयाणतः आहाराद्यभावतः च सः तत्र अचेतनः सन् अपतत् । यदा सः सचेतनः जातः तदा तस्य सेवां कुर्वतीं विकृतरूपां काञ्चित् दृष्टवान् । सा राजकुमाराय फलानि जलं च दत्तवती । यदा राजकुमारः सुस्थः जातः तदा सा उक्तवती – ''अहं काचित् पिशाची । भवान् मम निवासस्थानसमीपे अचेतनः सन् पतितः आसीत् । अहं भवन्तम् आनीय सेवां कृतवती । एतत् घोरारण्यं भवान् कथम् आगतः ?'' इति ।

राजकुमारः स्वपरिचयम् उक्त्वा तस्यै कृतज्ञतां समर्प्य उक्तवान् – ''मम प्राणान् रक्षितवती भवती देवता एव । गन्धर्वलोकं प्रति गमनार्थं मार्गं सूचयित्वा भवती अपरम् उपकारम् अपि करोतु कृपया'' इति ।

''भोः, साहसिक ! गन्धर्वलोकः प्राप्तव्यः चेत् आकाशमार्गे सञ्चारः करणीयः । मानवाः तत् कर्तुं न अर्हन्ति । असाध्ये कार्ये किमर्थं प्रवृत्तिः भवतः ?'' इति पृष्टवती पिशाची ।

''साध्यासाध्यताविषये न कापि चिन्ता मम । कार्यसिद्धिं विना कदापि न प्रतिगमिष्यामि'' इति उक्त्वा ततः निर्गन्तुम् उद्युक्तः निरञ्जनः ।

तदा तस्य गमनं निवारयन्ती पिशाची उक्तवती – ''भोः, अलं गमनेन । मम अपेक्षायाः पूरणं यदि भवता प्रतिज्ञायते तर्हि भवन्तं गन्धर्वलोकं प्रापयिष्यामि । तस्य अन्तः प्रवेशः कथम् इति तु भवता एव चिन्तनीयम्'' इति ।

''यदि भवती मां गन्धर्वलोकं प्रापयेत् तर्हि भवत्याः अपेक्षा निश्चयेन पूरयिष्यते'' इति राजकुमारः प्रतिज्ञां कृतवान् । ततः पिशाच्याः आदेशस्य अनुसारं राजकुमारः नेत्रे निमीलितवान् । अनन्तरक्षणे तौ गन्धर्वलोकस्य द्वारसमीपे आस्ताम् ।

''इतः परम् अन्तःप्रवेशादिकं भवता

चिन्तनीयम् । अहम् अत्रैव उपविश्य भवतः प्रतीक्षां करिष्यामि'' इति उक्तवती पिशाची मेघखण्डस्य कस्यचित् उपरि उपविष्टवती ।

गन्धर्वलोकं प्रविष्टवन्तं नवतरुणं दृष्ट्वा आश्चर्यचकिताः गन्धर्वकन्यकाः तं गन्धर्वराजसमीपं नीतवत्यः । निरञ्जनः गन्धर्वराजं नमस्कृत्य स्वस्य आगमनस्य उद्देशं, पितुः दुर्दशां च विस्तरेण वर्णितवान् ।

एतत् श्रुत्वा गन्धर्वराजः नितरां सन्तुष्टः । सः स्वपुत्रीं पुष्पलताम् आदिष्टवान् – ''एतस्य पित्रे का शापं दत्तवती इति ज्ञात्वा वदतु'' इति ।

तदा पुष्पलता उक्तवती – ''एतस्य पित्रे शापं दत्तवती अहम् एव । यतः सः मम अपमाननं कृतवान् आसीत् । पुष्पराजस्य वृक्षस्य समीपे विहरन्तीं माम् उद्दिश्य 'मां परिणयतु' इति सानुरोधं वदन् सः मम कार्ये विघ्नम् उत्पादितवान् । अस्थाने अनुरागः प्रदर्शितः तेन'' इति ।

राजकुमारः पितुः प्रतिनिधित्वेन क्षमां प्रार्थयन् – ''देवि ! भवत्याः अपूर्वं सौन्दर्यं तस्य विवेकम् अनाशयत् । अज्ञानवशात् तेन प्रमादः कृतः । इदानीं सः पश्चात्तापदग्धः अस्ति । तस्य व्यवहारः भवतीम् अखेदयत् यत् तदर्थम् अहं क्षमां याचे । तं शापमुक्तं करोतु इति विनयेन प्रार्थये'' इति उक्तवान् ।

राजकुमारस्य विनम्रतां शिष्टतां च दृष्ट्वा पुष्पलता नितरां सन्तुष्टा । गन्धर्वलोकप्राप्त्यर्थं तेन यत् साहसं कृतं तत् श्रुत्वा सा आश्चर्यचकिता अपि । अन्ते सा एकं पुष्पं



यच्छन्ती उक्तवती – ''इतः गतः भवान् एतेन पितुः नेत्रे यदि स्पृशति तर्हि भवत्पिता दृष्टियुक्तः भविष्यति । किन्तु एतदर्थं नियमः अस्ति यत् इतः पूर्वं भवता वचनभङ्गः न कृतः स्यात्, अग्रे न करणीयः अपि । यदि वचनभङ्गः क्रियते तर्हि भवतः पितुः दृष्टिः पुनरपि विलुप्ता भविष्यति'' इति ।

पुष्पं स्वीकृत्य पुष्पलतायै कृतज्ञतां समर्प्य तस्याः गन्धर्वराजस्य च अनुज्ञां प्राप्य निरञ्जनः गन्धर्वलोकात् बहिः आगतवान् । पिशाची द्वारसमीपे एव आसीत् । सा तं गान्धारराजधानीं प्रापय्य – ''असम्भवम् अपि भवदीयं कार्यं सम्भवयोग्यं कृतवती अहम् । मम अपेक्षा पूरयिष्यते इति भवता प्रतिज्ञा कृता खलु ? भवान् मां परिणयेत्

इति मम अपेक्षा'' इति उक्तवती ।

''अनुमतं मया । भवत्या यत् उपकृतं तदर्थं यत्किमपि कर्तुं सिद्धः एव अस्मि अहम् । भवती क्षणं प्रतीक्षां करोतु । पितुः दृष्टिशक्तिम् उज्जीव्य एषोऽहम् आगच्छामि'' इति उक्त्वा राजकुमारः प्रासादं प्रविष्टवान् । पुष्पलतया दत्तेन पुष्पेण धन्वीश्वरस्य नेत्रे यदा स्पृष्टे तदा सः दृष्टिमान् जातः । राजा नितरां सन्तुष्टः । समग्रे राजभवने आनन्दतरङ्गाः उत्पन्नाः ।

अनन्तरं निरञ्जनः गन्धर्वलोकयात्रां पितरं विस्तरेण निवेद्य पिशाचीसमीपम् आगत्य उक्तवान् - ''अहं भवतीं परिणेतुं सिद्धः । किन्तु विवाहानन्तरं भवत्या प्रकोष्ठात् बहिः न आगन्तव्यम् । यतः भवतीं दृष्ट्वा सर्वे भीताः भवेयुः'' इति ।

पिशाची सन्तोषेण एतं नियमम् अङ्गीकुर्वती उक्तवती - ''भवान् यथा आदिशति तथा करिष्यामि'' इति ।

अनन्तरं तौ गान्धर्वविधिना विवाहितौ जातौ । विवाहसमनन्तरम् एव पिशाची राजकुमारीत्वेन परिवृत्ता जाता । निरञ्जनः ताम् आश्चर्यातिरेकेण पश्यन् स्थितवान् ।

तदा सा हसन्ती उक्तवती - ''राजकुमार ! किम् आश्चर्येण ? अहम् इदानीं वस्तुतः राजकुमारी अस्मि । मम पिशाचजन्म अपगतम् । अहं वत्सदेशस्य राजकुमारी । पिशाचजन्मतः भवान् माम् उन्मुक्तां कृतवान् यत् तदर्थम् अहं कृतज्ञा अस्मि । एकदा कश्चन मुनिः मयि अनुरागं प्राप्य मम पितरं प्रार्थितवान् यत् एताम् अहं परिणेष्यामि इति । शापभीत्या मम पिता एतं प्रस्तावम् अङ्गीकृतवान् । किन्तु मया निराकृतिः प्रदर्शिता । एतस्मात् कुपितः सः मुनिः शापं दत्तवान् यत् भवती पिशाचजन्म प्राप्नोतु इति । मम पित्रा दैन्येन सः बहुधा प्रार्थितः । तदा मुनिः उक्तवान् - 'कश्चन राजकुमारः पिशाचीरूपिणीम् एतां परिणेष्यति चेत् एषा शापात् मुक्ता भविष्यति' इति । सौभाग्यवशात् अद्य स च शुभसमयः मया प्राप्तः'' इति उक्तवती राजकुमारी ।

राजकुमारः पितरं प्रवृत्तं सर्वं विस्तरेण निवेदितवान् । ततः राजकुमारी-राजकुमारयोः विवाहः सवैभवं सम्पन्नः ।

- *(चन्दमामायां २५ वर्षेभ्यः पूर्वं प्रकाशिता कथा)*






# देहल्याः सप्त जन्मानि

महाभारतकाले पाण्डवानां निमित्तं मयेन निर्मिता मोहननगरी एव इन्द्रप्रस्थं नाम। तस्मिन् प्रदेशे निर्मितं प्रथमं नगरं तदेव, यच्च इदानीम् अतिविशाल-प्रजाप्रभुत्वोपेतराष्ट्रस्य राजधानी अस्ति।

इन्द्रप्रस्थं पुराणकालिकी नगरी। एतस्याः अवशेषाः अद्य न उपलभ्यन्ते। स्वधारामार्गं परिवर्तयन्ती यमुना तान् अवशेषान् समूलं नाशितवती स्यात्, भूम्यन्तर्गतं कृतवती स्यात् वा। तस्मिन् एव स्थाने पञ्च नगराणि अनन्तरकाले निर्मितानि। इदानीं तत्र स्थिता देहली सप्तमी नगरी।

'देहली नाम द्वारदेशः। भारतस्य प्रवेश-विषये एतन्नगरं प्रवेशद्वारायते इत्यतः 'देहली' इति एतस्य अन्वर्थं नाम। पुराणानि वदन्ति यत् एतत् नगरं सर्पराजस्य वासुकेः शिरसि अस्ति, यदा यदा सः शिरः कम्पयति तदा एतस्मिन् नगरे भूकम्पः दृश्यते इति। भूकम्पतः एव अत्रत्यनगराणां नाशः इति पुराणानाम् आशयः।

किन्तु वस्तुस्थितिः एतस्मात् भिन्ना एव दृश्यते। दिल्लीनगरस्य इतिहासः युद्धानाम् आक्रमणानां च घटनाभिः पूर्णः अस्ति। अतः विध्वंसकृत्यानि एव नगराणां नाश-कारणानि जातानि दृश्यन्ते।

इतिहासकालस्य परिशीलनात् ज्ञायते यत् राज्ञा अनङ्गपालेन रचितं नगरम् एव सर्व-प्रथमम् अत्र निर्मितम् ऐतिहासिकं नगरम् इति। तदीयं वासगृहं 'लालकोट'नाम्ना निर्दिश्यते स्म। अनन्तरकाले चौहानराजाः एतत् नगरं स्वराजधानीं कृतवन्तः। तेषु अतिप्रसिद्धः अस्ति पृथ्वीराजः। कन्नौजराजस्य पुत्र्यां संयुक्तायां पृथ्वीराजस्य विशेषानुरागः आसीत्। सयुंक्ता अपि तस्मिन् अनुरागवती आसीत् एव। किन्तु तयोः विवाहं संयुक्तायाः पिता राजा जयचन्द्रः न इच्छति स्म। सः पुत्र्याः विवाहं कर्तुम् इच्छन् स्वयंवरं व्यवस्थापितवान्। एतस्मिन् स्वयंवरे विविध-देशेभ्यः आगताः राजकुमाराः भागं गृहीत-वन्तः। अभिलषितस्य राजकुमारस्य कण्ठे

वरणमाला अर्पणीया आसीत् संयुक्तया ।

जयचन्द्रः उद्देशपूर्वकं पृथ्वीराजं न निमन्त्रितवान् आसीत् । प्रत्युत अवमाननार्थं द्वारपालकस्थाने तदीयां प्रतिमां निर्माय स्थापितवान् आसीत् सः । सयुंक्ता पितुः कृत्यस्य तात्पर्यम् अवगतवती । तथापि अभीता सा राज्ञां पङ्क्तौ सञ्चरन्ती पृथ्वीराजस्य प्रतिमायाः समीपं गत्वा प्रतिमायाः कण्ठे वरणमालाम् अर्पितवती । अत्रान्तरे पृथ्वीराजः अश्वम् आरुह्य कुतश्चित् आगत्य सर्वेषु राजसु पश्यत्सु संयुक्ताम् अश्वस्य उपरि आरोप्य ततः अदृश्यः अभवत् । ततः तयोः विवाहः विधिवत् प्रवृत्तः । एषा घटना ११७५ तमे वर्षे प्रवृत्ता ।

११९२ तमे वर्षे तुर्कीराजः मुहम्मदगोरी देहल्याः उपरि आक्रमणं कृतवान् । किन्तु पृथ्वीराजः तं पराजितवान्, कारागारे स्थापितवान् च । कारागारतः विमुक्तः गोरी अनन्तरवर्षे आक्रमणं कृत्वा जयचन्द्रस्य साहाय्येन पृथ्वीराजं पराजित्य संहृतवान् ।

परद्रोहं कृतवता जयचन्द्रेण अनन्तरवर्षे योग्यं दण्डनं प्राप्तम् । गोरी सहायकं जयचन्द्रम् एव संहृत्य तदीयं राज्यं वशीकृतवान् । अनन्तरकाले विद्रोहिणः सर्वे सम्भूय तस्यैव हननं कृतवन्तः ।

दिल्लीनगरं शासितवत्सु अधिकप्रसिद्धाः मोगलाः । १९११ वर्षे आंग्लेयाः दिल्लीनगरं स्वराजधानीं कृतवन्तः । १९४७ तमे अत्रैव भारतस्य स्वातन्त्र्यम् उद्घोषितम् अभवत् ।

एतस्मिन् नगरे असंख्यानि ऐतिहासिकानि स्मारकाणि सन्ति, यानि च आकर्षकाणि शिक्षाप्रदानि च ।

आधुनिकं देहलीनगरं, यच्च नवदेहली-नाम्ना निर्दिश्यते, १४८३ चतुरस्त्र कि.मी. विस्तृतम् अस्ति । अत्रत्या जनसङ्ख्या ९५ लक्षमिता । आंग्लभाषा, हिन्दीभाषा, पञ्जाबीभाषा, उर्दूभाषा च प्राधान्येन अत्र व्यवहारे दृश्यते ।

राष्ट्रराजधानीत्वेन देहलीनगरस्य विशेष-महत्त्वम् अस्ति । ७० सदस्यात्मिका विधानसभा, एका मन्त्रिपरिषत् च एतस्य प्रदेशस्य शासनव्यवस्थाभारं निर्वहति ।

दिल्ली भारतस्य राजधानी यथा, तथैव उत्तरभारतस्य प्रमुखं वाणिज्यकेन्द्रम् अपि । एतस्य अन्तः सीमाप्रदेशे च विभिन्नाः उद्योगाः प्रचलन्ति ।

नगरेऽस्मिन् बहवः विश्वविद्यालयाः अनेकानि प्राचीन-नवीन-शिक्षाकेन्द्राणि च सन्ति । एतत् नगरं राजनैतिकैः सांस्कृतिकैः च व्यवहारैः सर्वदा व्यापृतं भवति ।



# ऋणस्वीकर्तुः अवस्था

नरसिंहः कश्चन ग्रामाधिकारी । सः ग्रामस्य मध्ये स्थितस्य अश्वत्थवृक्षस्य अधः उपविश्य न्यायनिर्णयं करोति स्म । तस्य निर्णयः निष्पक्षपातसहितः भवति इति जनाः वदन्ति स्म । कदाचित् हीरालालः नाम कश्चन कुसीदवणिक् तत्समीपम् आगत्य अवदत् - ''श्रीमन् ! कष्टे पतितः अस्मि !'' इति ।

''किं कष्टं भवतः ?'' इति पृष्टवान् ग्रामाधिकारी ।

हीरालालः अवदत् - ''पार्श्वग्रामे शङ्करः नाम कश्चन जनः अस्ति । वर्षद्वयात् पूर्वं सः मत्तः सप्तशतं रूप्यकाणि ऋणरूपेण स्वीकृतवान् आसीत् । अद्यावधि तेन न वृद्धिः दत्ता, न वा ऋणं प्रत्यर्पितम् । सः ऋणं प्रत्यर्पयितुं न इच्छति इति भाति । अतः भवता एव तत् धनं प्रतिदापनीयम्'' इति ।

एतत् श्रुत्वा ग्रामाधिकारी भटम् आदिष्टवान् यत् शङ्करम् अद्यैव अत्र आनयतु इति ।

सः भटः शङ्करस्य गृहं गत्वा ग्रामाधिकारिणः आदेशं निवेद्य शङ्करेण सह ततः प्रस्थितवान् । स च मध्याह्नकालः । घोरः आतपः आसीत् । अतः सः भटः मध्येमार्गम् उक्तवान् - ''महान् आतपः । अतः वृक्षस्य अधः स्थित्वा किञ्चित् विश्रान्तिसुखम् अनुभूय अग्रे गच्छाम'' इति ।

एतत् श्रुत्वा शङ्करः आतङ्कमिश्रितस्वरेण उक्तवान् - ''वृक्षस्य अधः स्थितः मास्तु । समीपे स्थितेषु ग्रामेषु वसद्भ्यः बहुभ्यः अहम् ऋणं प्राप्तवान् अस्मि । किन्तु कस्यापि ऋणम् अद्यावधि न प्रत्यर्पितम् । तेषु कोऽपि यदि मां पश्येत् तर्हि ऋणप्रत्यर्पणप्रस्तावं कुर्यात् एव । अतः त्वरया इतः गच्छाम तावत्'' इति ।



# पुरस्कारः प्राप्यताम् !!!

एतस्मिन् अङ्के प्रकाशितानां प्रश्नानाम् उत्तरम् अग्रिमाङ्के प्रकाशयिष्यते । ततः पूर्वं - चन्दमामा (संस्कृतम्) भारतावगतिप्रश्नोत्तरम्, अक्षरम्, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५ इत्येतस्मै सङ्केताय उत्तरं प्रेषयितुम् अर्हन्ति भवन्तः । किन्तु एतस्यां प्रश्नोत्तरस्पर्धायां स्वस्य भागग्रहणार्थम् अधोनिर्दिष्टायाः सर्जनात्मककृतेः प्रेषणम् अनिवार्यम् ।
एतस्यां सञ्चिकायां प्रकाशितासु कथासु का भवते विशेषतः अरोचत, किमर्थं च अरोचत इति शतशब्दैः एकं पत्रं लेखनीयम् । अध्यापकस्य प्रेषकस्य वा हस्ताक्षरेण प्रमाणीकृत्य नाम, वयः, कक्ष्यां, विद्यालयनाम (यदि अधीयमानम् अस्ति तर्हि), पूर्णसङ्केतं च लिखित्वा उपर्युक्तसङ्केताय प्रेषयन्तु ।

प्रथमपारितोषिकं **रू. १००० - ००**
द्वितीयपारितोषिकं **रू. ५०० - ००**
प्रोत्साहकपारितोषिकाणि (पञ्च)
प्रतिजनं **रू. २०० - ००**

चन्द



## भारतावगतिप्रश्नाः



कश्चन आक्रामकः कञ्चित् राजानम् अपहृत्य कारागारे स्थापयित्वा तस्य पत्न्यै वार्तां प्रेषितवान् यत् यदि भवती मां परिणेष्यति तर्हि एव भवत्याः पत्युः बन्धमोक्षः भविष्यति इति । राज्ञी एतं प्रस्तावम् अङ्गीकृत्य शिबिकायाम् उपविश्य दासीगणेन सह आक्रामकस्य शिबिरं प्राप्तवती । राज्ञ्या सह आगताः वस्तुतः दास्यः न आसन्, प्रत्युत सैनिकाः आसन् । ते शत्रुगणस्य उपरि हठात् आक्रमणं कृतवन्तः । अत्रान्तरे सा वीराङ्गना राज्ञी पतिं बन्धनात् विमोच्य स्वभवनं नीतवती आसीत् ।

एतस्मिन् ऐतिहासिके आख्याने प्रस्तुतौ राज्ञी राजा च कौ ? स च आक्रामकः कः ? एषा घटना कस्मिन् शतके प्रवृत्ता ?



अधोलिखितानां पौराणिकयुगलानां परस्परसम्बन्धः कः ?

चन्दमामा - विविधभाषामयी

# चिन्त्यताम् ! अभिव्यज्यताम् !!

मामा





१. का भारतीयसाहित्यकृतिः विश्वस्य प्रथमनीतिकथा(फेबल्स्)सङ्ग्रहत्वेन परिगण्यते ? तस्य रचयिता च कः ?

२. का भारतीयसाहित्यकृतिः विश्वस्य प्रथमकथासाहित्य(फिक्शन्)-सङ्ग्रहत्वेन परिगणयते ? तस्य रचयिता कः ?

३. का भारतीयसाहित्यकृतिः विश्वस्य प्रथम-उपदेशात्मक-आध्यात्मिक-कथासङ्ग्रहत्वेन परिगण्यते ?

४. किं भारतीयधर्मशास्त्रम् आधिक्येन अधीयते लोके ?

५. प्राचीनभारतीयसाहित्यस्य चत्वारः कालघट्टाः के ?



**एते अंशाः अवधातव्याः**

**नियमाः -**

१. चन्दमामा इण्डिया लि., लिण्टास् अमिराट्टिपुरीस् इण्डिया लि., इनिषियेटिव् मीडिया, ब्रिटानिया इण्डस्ट्रीस् - इत्येतासां संस्थानाम् उद्योगिनः, तेषां बान्धवाः, सहयोगिनः एतस्यां स्पर्धायां भागग्रहणे अर्हाः न भवन्ति ।

२. निर्णायकानां निर्णयः एव अन्तिमः । एतद्विषये पत्रव्यवहारः न करणीयः ।

३. येषाम् अक्षराणि सुन्दराणि न भवन्ति, तेषाम् उत्तरं तिरस्क्रियते ।

४. परिणामः मे - २००० सञ्चिकायां प्रकाशयिष्यते ।

५. उत्तराणि प्राप्तुम् अन्तिमदिनाङ्कः - ३१ मार्च्, २०००

| | | | |
|---|---|---|---|
| अ. | भीमः | - | शिशुपालः |
| आ. | जरासन्धः | - | कंसः |
| इ. | भीष्मः | - | विचित्रवीर्यः |
| ई. | अश्वत्थामा | - | कृपाचार्यः |
| उ. | विदुरः | - | शुकदेवः |

## - अभिन्नपरम्पराद्योतिका -

# वास्तविकः चमत्कारः

सायङ्कालिकः कश्चन कालः । कश्चन वणिक् स्वस्य आपणं पिधाय वाणिज्यात् प्राप्तं धनं गृहीत्वा गृहं प्रति गच्छन् आसीत् । तावता कश्चन युवकः हठात् आगत्य वणिजः हस्ते विद्यमानं धनस्यूतम् आकृष्य गृहीत्वा ततः पलायितवान् ।

वणिक् महान्तं कोलाहलं कृतवान् । तदा बहवः जनाः सम्मिलिताः । विषयं ज्ञात्वा सर्वे धावन्तः गत्वा चोरं गृहीतवन्तः । ते तं दण्डाधिकारिणः समीपं नीतवन्तः । युवकः दण्डाधिकारिणः पादौ गृहीत्वा दैन्येन क्षमां प्रार्थितवान् ।

दण्डाधिकारी एतादृशं दैन्यं न असहत । सः पादेन एव तं चोरं प्रहृतवान् । पादप्रहारं प्राप्य सः चोरः दूरे पतितः । बुद्धिमान् सः एतं सदवकाशं मन्यमानः ततः पलायनं कृतवान् ।

दण्डाधिकारिणः सैनिकाः तम् अनुसृत्य धावितवन्तः । तावता अन्धकारः प्रसृतः आसीत् । अतः चोरः इतस्ततः धावन् पुनः पुनः मार्गपरिवर्तनं कुर्वन् आत्मरक्षणे समर्थः जातः ।

सः नगरात् निर्गत्य एकम् अरण्यं प्राप्तवान् । निरन्तरधावनात् सः नितरां श्रान्तः आसीत् । किन्तु कुत्रचित् अपि स्थातुं तस्य धैर्यं न आसीत् । अतः सः अग्रे गतवान् । दूरे कुत्रापि तेन एकं कुटीरं दृष्टम् । महती पिपासा तं बाधते स्म । अतः सः कुटीरं प्राप्तुं प्रयत्नं कृतवान् । किन्तु सः न शक्तः । कुत्रचित् मार्गपार्श्वे एव सः पतितः सन् विसंज्ञः जातः । अनुसृत्य आगताः सैनिकाः तम् अपश्यन्तः अग्रे गतवन्तः ।

कुटीरे कश्चन महात्मा निवसति स्म । सः



मूर्च्छितं युवकं दृष्ट्वा करुणया तं कुटीरं नीतवान् । प्रथमोपचारं कृतवान् च । चोरः तरुणः सञ्ज्ञां प्राप्तवान् ।

''आर्य ! भवत्समीपे स्थातुम् अवकाशं दत्त्वा माम् अनुगृह्णातु कृपया'' इति प्रार्थितवान् तरुणः । सः चिन्तितवान् आसीत् यत् अत्र स्थितं चेत् भटाः मां न गृह्णीयुः, एतादृशं स्थलं प्रायः ते अन्वेषणार्थं न आगच्छेयुः एव इति ।



दयालुः महात्मा तं शिष्यत्वेन स्वीकृतवान् । युवकः तत्र स्थितवान् । महात्मा तं ध्यानादिकं बोधितवान्, उत्तमविचारं चापि बोधितवान् । एतस्य कारणतः सः तरुणः महात्मनः भक्तः जातः । गच्छता कालेन उत्तमं ज्ञानं सम्पादितं तेन ।

केषाञ्चित् वर्षाणाम् अनन्तरं सः महात्मा दिवङ्गतः । किन्तु तावता तस्य शिष्यः अपि महात्मा जातः आसीत् । सः तस्मिन् एव कुटीरे वसति स्म । बहवः तस्य शिष्यत्वं प्राप्तवन्तः । तदीया कीर्तिः देशे सर्वत्र प्रसृता ।

एकदा शिष्याणाम् अनुरोधेन सः नगरसञ्चारार्थं गतवान् । बहवः तस्य दर्शनार्थं आगताः । ते विविधान् प्रश्नान् पृष्टवन्तः । एषः समुचितानि उत्तराणि उक्तवान् । ततः सर्वे सन्तुष्टाः ।

प्रवचनस्य अनन्तरं कश्चन वृद्धः तं साष्टाङ्गं प्रणम्य उक्तवान् - ''महात्मन् ! मादृशः कश्चित् यदि भगवत्सान्निध्यं प्राप्तुं शक्नुयात् तर्हि सः चमत्कारविषयः स्यात् । अद्यावधि मया पाशविकं जीवनं यापितम् । पूर्वम् अहम् एतन्नगरस्य दण्डाधिकारी आसम्'' इति ।

''चमत्कृतयः सम्भवन्ति मित्र ! पूर्वं कदाचित् अहं भवतः पादौ गृहीतवान् आसम् । किन्तु अद्य भवान् मम पादौ गृह्णन् अस्ति । किम् एषः चमत्कारविषयः न ? यदि चोरे भगवतः कृपा भवेत् तर्हि चोरग्रहीतरि कुतो वा सा न भवेत् ?'' इति हसन् पृष्टवान् सः महात्मा ।

निवृत्तदण्डाधिकारी महात्मनः कथनस्य आशयम् अनवगच्छन् आश्चर्येण इतस्ततः दृष्टवान् । तदा महात्मा पूर्वतनघटनां सङ्ग्रहेण विवृत्य स्वस्य प्रगतेः कारणं निवेदितवान् ।

वृद्धः निवृत्तदण्डाधिकारी महात्मनः पादौ सुदृढं गृहीतवान् । तस्य नेत्राभ्याम् पश्चात्तापाश्रूणि आगतानि ।

## कटाक्षेण प्रपञ्च-वीक्षणम्

# पुनरपि जगतः अवधानम् आकर्षति टिबेट्

पूर्वं प्रपञ्चे बाहुबलं देशानां भविष्यं निर्णयति स्म । किन्तु द्वितीयजागतिकयुद्धस्य (१९३९-१९४५) अनन्तरं परिस्थितिः परिवृत्ता जाताः । परस्परावगतितः परस्परचर्चातः च राजकीयसमस्यानां परिहारार्थं कृताः प्रयत्नाः प्राबल्यं गताः ।

किन्तु अद्यापि क्वचित् बाहुबलम् एव विराजते । पूर्वं भारतं बहुराज्यमयः देशः आसीत् । देशस्य विभागः यदा निश्चितः तदा राज्यशासकानां कृते भारतपाकिस्थानयोः अन्यतरस्य चयने अवकाशः प्रदत्तः । अन्ये अनेके राजानः इव काश्मीरराजः हरिसिंहवर्यः स्वराज्यं भारते एव अन्तर्भावयितुम् एव इष्टवान् । किन्तु पाकिस्थानेन अनधिकृतरूपेण बलप्रयोगं कुर्वता काश्मीरस्य भूयान् भागः स्वायत्तीकृतः । स च भूप्रदेशः एव 'स्वतन्त्रकाश्मीर'शब्देन निर्दिश्यते तेन ।

एवम् एव विंशतितमशतकस्य मध्यभागे चीनादेशः टिबेट्देशस्य स्वाधीनीकरणे प्रयत्नम् अकरोत् । भौगोलिकतया चीनादेशस्य पार्श्वे एव तिष्ठन् अपि टिबेट्देशः संस्कृत्या शासनव्यवस्थया च पार्थक्यं भजते । तत्र बौद्धमतस्य एव प्राबल्यम् । दलैलामः तस्यैव मतस्य अनुयायी । चतुर्दशः दलैलामः टेञ्झिन् गयाट्सो शरणर्थी सन् भारतम् आगतवान् । धर्मशालानामके केन्द्रे वसन् सः शासनव्यवहारस्य मार्गदर्शनं करोति स्म ।

शासनव्यवहारे पञ्चम्लामः द्वितीयं स्थानम् अर्हति । (प्रथमः तावत् दलैलामः) चीनादेशः एतस्य कार्यालयं स्वमुष्ट्यधीनम् अकरोत् । कर्मपः टिबेटियन्जनानां प्रमुखेषु तृतीयः । एतस्यापि निग्रहणे प्रयत्नम् अकरोत् चीनादेशः । इदानीम् उग्येन्-ट्रिन्ले-दोर्जीवर्यः कर्मपस्थाने अस्ति, यस्य वयः सप्तदशः ।



सः गते जनवरीमासे शरणार्थी सन् भारतम् आगत्य धर्मशालाप्रदेशं प्राप्तवान् अस्ति ।

कर्मपोऽयं वयसा तरुणः । सः चीनदेशस्य निग्रहणं न असहत । अतः सः कैश्चित् एव अनुयायिभिः सह पर्वतान् खातान् च अतिक्रम्य सुदीर्घं प्रयाणं कृत्वा, हिमपात-झञ्झावातादि-प्राकृतिकसमस्याः बहुधा सम्मुखीकृत्य अन्ते भारतस्य प्राप्तौ यशस्वी जातः ।

'दि हेरिटेज्'पत्रिकायाः (या च चन्दमामा-संस्थया एव प्रकाश्यते स्म ।(१९८५-१९८९) प्रतिनिधेः पुरतः टिबेट्देशविषये चीनदेशेन क्रियमाणान् अत्याचारान् विवृण्वन् सः अवदत् - ''सांस्कृतिकपुनरुत्थाननाम्ना चीनादेशेन असङ्ख्याः धार्मिक-सांस्कृतिक-ग्रन्थाः नाशिताः । पवित्राः ते ग्रन्थाः तैः पादैः विमर्दिताः, शौचगृहेषु मालिन्यनिवारणार्थम् उपयुक्ताः च ।''



हेरिटेज्पत्रिकया पृष्टम् आसीत् - ''किं सा दृष्टिः अद्य परिवर्तमाना अस्ति ?'' इति ।

''आम् । दृष्टिपरिवर्तनं दृश्यते'' इति उक्तवान् आसीत् दलैलामः तत्काले ।

'अग्रिमदिनेषु परिवर्तनं भविष्यति । टिबेट्-देशस्य अधिकारस्वातन्त्र्यम् अनुमतं भविष्यति' इत्येतत् तस्य वचनस्य तात्पर्यम् आसीत् । दलैलामः कर्मपः च स्वराजधान्यां लासायां निर्बाधं यदि स्थातुं शक्नुयातां तर्हि एव तत् सिद्धं स्यात् ।



टिबेट्देशः 'जगतः वलभी' इति ख्यातः । यतः एतस्य स्थितिः अत्युन्नते स्थाने भवति । अत्रत्यः अत्यधोदेशः अपि समुद्रतलात् ४००० मीटर्-उन्नते स्थले भवति । कृषिः मेषपालनं च अत्र प्रमुखवृत्तिः । ऊर्ण-सुवर्ण-गोधूमादीनां वाणिज्यम् अपि तत्र प्राधान्येन प्रचलति । 'याक्'नामकः पशुः तेषां जीवनाधारः । यतः सः महतीं हिमपीडाम् अपि सहते । टिबेटीयाः सर्वे बुद्ध-मतावलम्बिनः । कठिनपरिश्रमः तेषां सहजः स्वभावः ।

# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५



युक्ता शीर्षिका मार्च् - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्त्रतमवर्षस्य मे-मासे प्रकाशयिष्यते ।

## अभिनन्दनानि



'जनवरी'मासस्य स्पर्धायाः शीर्षिकाप्रेषकः

**श्री एस्. के. केम्भावि**
टूल् रूम्, एम्.टि.पि. फेक्टरी
अम्बरनाथ - ४२१५०२
थाणे(जि), महाराष्ट्रम्



प्रथमचित्रम् - **तालानुगुणं चलन्ति एते ।**
द्वितीयचित्रम् - **गीतानुगुणं नृत्यामो वयम् ।**

